# सामवेदसंहिता

## ( आग्नेयं पर्व )



श्रीसत्यचरण-राय-देवशर्म्म-साङ्ख्यवेदान्तवेदतीर्थ-
कृताधियाज्ञिकाध्यात्मिकभाष्यान्वयपदपाठव्याकरणा-
द्युपेता विविधटिप्पनीसमलङ्कृता च ।

प्रथमावृत्तिः ।

१९२१

---

 [ मूल्यं सार्द्धैकरूप्यकम् ।

ओ३म् वेद प्रकाशाचार्य

२-३-२६

# विज्ञप्तिः

ॐ 'विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव' (यजुः)
'नावेदविन्मनुते तं बृहन्तम्' (तैत्तिरीयब्रा०)।

यथा पिता स्वसन्ततिं प्रति सदैव करुणां दधाति तथा परमपिता परमेश्वरो मनुष्याणां धर्मार्थकाममोक्षसिद्धये तद्विपरीतार्थपरिहाराय च ऋग्यजुस्सामाथर्वसंज्ञकान् चतुर्वेदान् प्रकाशितवान् (२८ मन्त्रव्याख्या द्रष्टव्या)। विदन्ति जानन्ति विद्यन्ते भवन्ति विन्दन्ति लभन्ते विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा ते वेदाः। तथा च सायणः—'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः'। स्मर्यते च मनुना 'वेदोऽखिलो धर्ममूलम्' (२।६) इति।

वेदानामीश्वरोक्तत्वे नित्यत्वे च भूयांसि प्रमाणानि सन्ति। प्रथमं तु परमात्मनः सकाशात्तेषां वेदानां प्रकाशे सति स्वत एव तेषां नित्यत्वं भवति। तथा च वेदे 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' (ऋ० ८।४।१८) —तस्मात्सर्वपूज्याद्यज्ञपुरुषात्परमात्मनश्चतुर्वेदा उत्पन्ना इति संक्षिप्तोऽर्थः। अपरन्तु 'यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन्। सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्। स्कम्भं तं ब्रूहि कतमः स्विदेव सः' (अथर्व० १०।४।७)—कीदृशः स ईश्वरो यस्मादृग्वेदः समुत्पन्नो यजुर्वेदः प्रादुर्भूतः सामानि यस्य लोमानीवाथर्ववेदो यस्य मुखमिव मुख्य इति? अस्योत्तरमाह—तं जगद्धारकं विजानीहि। अपरमपि 'तस्मै नूनमभिद्यवे वाचा विरूप! नित्यया वृष्णे चोदय सुष्टुतिम्' (ऋ० ६।५।२५)—हे विविधरूपयुक्ताग्ने! त्वं सर्वतो द्योतमानाय कामानां वर्षयित्रे तस्मै परमात्मने नित्यया वेदिकमन्त्ररूपया वाचा स्वाभिः क्रियमाणां शोभनां स्तुतिं सर्वथा प्रेरय। तथा निरुक्ते 'पुरुषविद्यानित्यत्वात्कर्मसम्पत्तिर्मन्त्रो वेदे' (१।२।७)। पूर्वमीमांसायाम् 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' (१।१।१८)। वेदान्ते 'शास्त्रयोनित्वात्' 'अतएव च नित्यत्वम्' (१।१।३॥१।३।२९)। न्यायदर्शने 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (२।१।६७)। योगदर्शने 'स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्' (१।१।२६)। सांख्ये 'निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्' (५।५१)। वैशेषिके 'तद्वचनादाम्नायस्य प्रामाण्यम्' (१।१।३)। महाभाष्येऽपि 'नित्याः शब्दा नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिरिति'

विज्ञानकर्मोपासनाज्ञानकाण्डभेदाच्चत्वारो विभागा वेदानां सन्ति। ऋग्भिश्शंसन्ति स्तुवन्ति, यजुर्भिर्यजन्ति, सामभिर्गायन्ति, थर्वतिश्चरतिकर्मा तत्प्रतिषेधः (नि० ११।१८।१)।

'महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' 'एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति' 'कर्मजन्मानः' 'आत्मजन्मानः' 'आत्मैवैषां रथो भवत्यात्माश्व आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य' (नि० ७।४।८,९,१३,१४,१५)। परमात्मनः सर्वशक्तिमत्त्वात् सर्वासां व्यवहारोपयोगिदेवतानां मध्ये तस्यैव मुख्यं देवतात्वमस्ति। वेदेष्वद्वितीयस्य तस्यैव बहुधा स्त्यादिनाप्युपासना विहिता।

वैदिकमन्त्राणां विशेषनियमानाह—'तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिकयश्चेति' 'तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य' 'अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना' 'अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना' ( नि० ७।१।५,६॥७।२।२,५ ) तथा त्रिविधानि मन्त्रव्याख्यानानि भवन्ति। तद्यथाधियज्ञं यज्ञमधिकृत्येति, अधिदैवतं दैवताविज्ञानमधिकृत्येति, अध्यात्ममात्मानमिन्द्रियादिकं ब्रह्म वाधिकृत्येति।

वैदिकसंज्ञानां यौगिकार्थे प्रमाणम् 'परं तु श्रुतिसामान्यम्' (मी० १।१।३१) 'नाम च धातुजमाह' (महाभा०) तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च' (नि० १।१२।२)

परमात्मविषयकोऽर्थो मुख्यः 'सर्वे वेदा यत्पदमामनन्ति' (कठ)।

ऋषयो मन्त्रद्रष्टारः। स्तूयते या सा देवता। छन्दांसि गायत्र्यादीनि।

ओंकारपूर्वकं मन्त्रोच्चारणं विहितम्। 'ओमभ्यादाने' (पाणि० ८।२।७) ओंशब्दस्य प्लुतः स्यादारम्भे। ओमिति परमात्मनो मुख्यं नाम। अ-उ-म एतत्त्रयं मिलित्वोमित्यक्षरं भवतीति मनुः। अपरमपि 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह' इति शिक्षायाम्। योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमित्याह च मनुः।

तत्रोपासनाप्रधानस्तृतीयस्सामवेदः। छन्दोगार्चिकमिति च संहिताभागो द्विधा भिन्नः। छन्दसामेवार्चिक इति नामान्तरम्। पूर्वारण्यकमहानाम्न्युत्तरभेदेन आर्चिकग्रन्थाश्चत्वारः। गेयारण्यकमहानाम्न्यूह्योह्यभेदेन गानग्रन्थाः पञ्च। ऋचस्तु सान्नां योनिः। तथा च छान्दोग्ये 'ऋच्यध्यूढं साम गीयते' (१।६।५) अतस्तेषां व्याख्यानमादौ कर्त्तव्यम्। आर्चिकग्रन्थेषु यथा सामयोनीनामृचां (पद्यात्मकानां) सङ्ग्रहस्तथैव सामयोनिभूतानां यजुषां (गद्यात्मकानां) स्तोभग्रन्थे। 'स्तोभहीनमार्विर्गानम्' 'लिङ्गं स्तोभमृचा सह' 'ऋग्विहीनं स्तुतगानम्'। सामयोनीनामृचां भाष्यं दृश्यते। स्तोभपदानां भाष्यं नास्ति, अतोऽर्थरहिता मन्त्रा मननयोग्या न भवन्ति। अर्थज्ञानप्रशंसार्थाज्ञाननिन्दानेन प्रतिपादिता 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा'। पूर्वार्चिके आग्नेयमैन्द्रं पवमानं चेति पर्वत्रयम्। श्रौतस्मार्तयज्ञानामग्न्याधानाग्निहोत्रपूर्वकत्वादाग्नेयपर्वणः प्रथमसन्निवेशः। 'अग्निर्वै दीक्षितस्य देवता' (तै० सं० ३।१।१) तथा चोक्तम् 'अग्ने व्रतपते व्रतं चरिष्यामि' (य० १।५) 'अग्निः पृथिवीस्थानः' (नि० ७।५।२)।

साममन्त्रेषु १,२,३ चिह्नानि उदात्तानुदात्तस्वरितस्वरज्ञापकानि। 'उच्चैरुदात्तः' नीचैरनुदात्तः' 'समाहारः स्वरितः' (पाणि०)। गानानां सप्तस्वरास्तद्यथा 'षड्जश्चैवर्षभश्चैव गान्धारो मध्यमस्तथा। पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः॥' नारदीयशिक्षायां विशेषो द्रष्टव्यः। कृतेऽपि भूयसि यत्ने क्वचिन्मुद्रणप्रमादो जातस्तद्दोषः सुधीभिः क्षन्तव्य इति। धन्योऽस्तु श्रीसत्येन्द्रनाथसेनो यस्याहैतुकी सहायता मां कृतज्ञताप्रकाशायोन्मुखयति। अलमतिपल्लवेन। शमित्योम्।

विद्वज्जनकृपाभिलाषी

श्रीसत्यचरणराय-देवशर्म्मा।

# ऋचां सूचीपत्रम्।

# साङ्केतिकानि चिह्नानि।

| | |
|---|---|
| अ० | अव्ययम्। |
| आ० | आर्षेयम्। |
| ऋ० | ऋग्वेदः। |
| ऐ० | ऐतरेयम्। |
| क्रि० | क्रिया। |
| गी० | गीता। |
| ता० म० | ताण्ड्य-महाब्राह्मणम्। |
| तै० | तैत्तिरीयम्। |
| नि० | निरुक्तम्। |
| पि० सू० | पिङ्गलच्छन्दःसूत्रम्। |
| ब्रा० | ब्राह्मणम्। |
| मी० | मीमांसा। |
| मं० | मन्त्रः। |
| यजुः | यजुर्व्वेदः। |
| योग० | योगदर्शनम्। |
| महा० | महाभाष्यम्। |
| लाट्या० | लाट्यायन-श्रौतसूत्रम् |
| स० | सम्बोधनम्। |
| श० | शतपथम्। |

पदपाठः।

| | |
|---|---|
| १ | प्रथमा। |
| २ | द्वितीया। |
| ३ | तृतीया। |
| ४ | चतुर्थी। |
| ५ | पञ्चमी। |
| ६ | षष्ठी। |
| ७ | सप्तमी। |

---

| | | | |
|---|---|---|---|
| ३० | ९ | ऋत्विभिः | ऋत्विग्भिः |
| ३१ | १ | दशति | दशतिः |
| ३२ | २२ | अतिथिन् | अतिथिम् |
| ३६ | २६ | ... | हव्यवाहम् (१२)—हव्यपूर्वाद्वहतेर्ण्विः 'वहश्च' ३।२।६४ इति। तम्। |
| ३६ | २७ | ... | हविष्कृतः (१३)—५८। |
| ३८ | २० | तिग्मन | तिग्मेन |
| ४० | १६ | अग्ने | अग्नेः |
| ४१ | २० | वहन्तिः | वहन्ति |
| ४२ | २० | ... | विश्पते सं०। |
| ४६ | १३, १४ | अस्माकमनु | अस्माननु |
| ४६ | २० | अस्माकमनु | अस्माननु |
| ५० | ११ | शस्त्र | शस्त्रे |
| ५३ | २२ | १व० | बहुव० |
| ५४ | ८ | (१४) | (२४) |
| ५४ | २० | उत्तम | मध्यम |

# शुद्धिपत्रम् ।

| पत्रे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ४ | बहुनि | बहूनि |
| ७ | १२ | परमात्मा... | 'विपन्यया' |
| ११ | १७ | ते ६ ।... | वत्स: १ । |
| १६ | १ | व्याकरणम् | सामवेदसंहिता |
| १६ | २ | दानादनयो | दानादनयोः |
| १८ | ४ | पूव | पूर्वं |
| २० | २८ | आदेश: | -देश: |
| २३ | ५ | ऋजति: | ऋजति |
| २३ | १७ | परमात्मानम् | अग्निम् |
| २३ | १८ | आधियाज्ञिकम् | भाष्यम् |
| २३ | २२ | त्वां परमात्मानम् | त्वामग्निं परमात्मानं वा |
| ३० | ९ | ऋत्विभि: | ऋत्विग्भि: |
| ३१ | १ | दम्पति | दम्पति: |
| ३२ | २२ | अतिथिन् | अतिथिम् |
| ३६ | २६ | ... | हव्यवाहम् (१२)—हव्यपूर्वा-<br>द्वहतेर्ण्विः 'वहश्च' ३।२।६४<br>इति । तम् । |
| ३६ | २७ | ... | हविष्कृत: (१३)—पूर्ववत् । |
| ३८ | २० | तिग्मन | तिग्मेन |
| ४० | १६ | अग्ने | अग्ने: |
| ४१ | २० | वहन्ति: | वहन्ति |
| ४२ | २० | ... | विश्पते सं० । |
| ४६ | १३, १४ | अस्माकमनु | अस्माननु |
| ४६ | २० | अस्माकमनु | अस्माननु |
| ५० | ११ | ग्रस्त | ग्रस्ते |
| ५३ | २२ | १व० | बहुव० |
| ५४ | ८ | (१४) | (२४) |
| ५४ | २० | उत्तम् | मध्यम |

| पत्रे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | २ | शत: | शतृप्रत्यय: |
| ५७ | १५ | १व० | बहुव० |
| ५८ | १० | शत: | शतृप्रत्यय: |
| ६४ | १० | ऋवंम् ८। | ऋवंम् २। |
| ७० | १८ | मुनीत्या | सुनीत्या |
| ७४ | ४ | श्री | श्री |
| ७४ | १० | स्त्रियां | स्त्रियां |
| ७६ | ३ | शत: | शतृप्रत्यय: |
| ८४ | २० | मनुस्य | मनुष्य |
| ९७ | १२ | चतुर्थी, चतुर्थ | पञ्चमी, पञ्चम |
| १०१ | ३ | ऋष: | ऋषे: |
| १०१ | १३ | पीषिण | पीषिणं |
| १०६ | २ | न्यते | हन्यते |
| १०७ | १३ | सुनृतं | सूनृतं |
| १११ | १० | यदव | यद्देव |
| १२३ | ८ | शत: | शतृप्रत्यय: |
| १२३ | ३२ | व्यत्ययेन। | व्यत्ययेन प्रथमा च। |
| १२४ | ४ | शत: | शतृप्रत्यय: |
| १२४ | २५ | स्त्रायति | स्यायति |
| १२६ | ९ | ह्विरादिगणश्च। | ह्विरादिगणश्च बाहुलकात्। 'ह्वर्य' गतिकान्त्यो: स्वा० धातोर्वा। |
| १३४ | ३ | स्वरूप | स्वरूपं |
| १३५ | २१ | समूहान् | समूलान् |
| १३६ | २३ | विभक्ते | विभक्तेः |
| १३७ | ४ | आयास्यतिर्वा | आयास्यति वा |
| १३८ | २३ | विभक्तेर्लुक् | विभक्तेर्डा |
| १३८ | २९ | शत: | शतृ प्रत्यय: |
| १४९ | १० | ऋत्विग्भि: | ऋत्विग्भि: |
| १५५ | २१ | स्तोवम् | स्तोमम् |
| १६१ | १९ | ह | हे |

ओ३म्

# सामवेदसंहिता

## ( छन्द आर्चिकः )

प्रथमम् ( आग्नेयं ) पर्व । प्रथमोऽध्यायः । प्रथमः प्रपाठकः । प्रथमः खण्डः । प्रथमा दशतिः ।

[ 'परं तु श्रुतिसामान्यम्' मी० १।१।३१ ॥ 'नाम च धातुजमाह'। महा० ॥ श्लेषेणार्थद्वयं, परमात्मविषयको मुख्यः 'सर्वे वेदा यत्पदमामनन्ति'। कठ० ॥ ]

### अथ प्रथमा ।

अग्न आयाहीत्यृचो बार्हस्पत्यो भरद्वाज ऋषिः। द्वे सामनी ( गोतमस्य पर्कांवभितः कश्यपस्य बर्हिष्यं मध्यमम्। आ० ब्रा० ) गायत्रीछन्दः (गायत्र्या वसवः (क)। पि० छ० सू० ३।३) अग्निर्देवता (तस्याः स्तूयमानत्वात् 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' नि० ७।१।४) अग्नेराह्वानेऽस्या विनियोगः (...तैराह्वयति। अग्न आयाहि वीतये...। ता० म० ब्रा० ११।२।२, ३ ) इति याज्ञिकम्। अध्यात्मं तु मन्त्रार्थ एव उक्तम्।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ।
१ २र २र ३ १ २
नि होता सत्सि बर्हिषि ॥ १ ॥ (ख)

---

(क) वसवोऽष्टाक्षराणीति ॥ अष्टाक्षरा वै गायत्री। श० ब्रा०, कां० १। प्र० ६। ब्रा० १।२३ ॥

(ख) ऋग्वेदे, अष्ट० ४। अध्या० ५। व० २२। एवमेव पाठः।

**पदपाठः ।** अग्ने सं० । आयाहि क्रि० । वीतये ४ । गृणानः १ । हव्यदातये ४ । नि अ० । होता १ । सत्सि क्रि० । बर्हिषि ७ ।

**अन्वयः ।** [हे] अग्ने [त्वं] वीतये हव्यदातये [च] [अस्माभिः] गृणानः [सन्] आयाहि । [आगत्य च] होता [त्वं] बर्हिषि निषत्सि । (क)

**आधियाज्ञिकं भाष्यम् ।** हे 'अग्ने' यज्ञदेव ! त्वं 'वीतये' हविषां भक्षणाय [ अग्निमुखा वै देवताः । ता० म० ब्रा० २५।१४।४ ॥ अग्नि र्वै देवतानां मुखम् । श० ब्रा० ३।७।२।६ ] 'हव्यदातये' देवेभ्यो हविष्प्रदानाय च अस्माभिः 'गृणानः' स्तूयमानः सन् 'आयाहि' अस्मद्यज्ञं प्रति आगच्छ । आगत्य च 'होता' होमनिष्पादकः त्वं 'बर्हिषि' बृंहति वर्धते ज्ञानं यत्र तस्मिन् यज्ञे 'निषत्सि' आहितो भव । (ख)

**आध्यात्मिकं भाष्यम् ।** हे 'अग्ने' परमात्मन् ! [इन्द्रं मित्रं वरुण मग्नि माहु रथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान माहुः । ऋग्वेदे, अष्ट० २ ।

---

(क) 'व्यवहिताश्च' १।४।८२ व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः । उपसर्गस्य विप्रकृष्टत्वेऽप्यन्वयकाले नैकट्यं स्यात् । 'सदिरप्रतेः' ८।३।६६ प्रतिभिन्नादुपसर्गात् सदेः सस्य षः स्यात् ।

(ख) श० ब्रा० १।३।३।२२,२३,२४ एवमस्ति :—अग्न ऽआ याहि वीतय इति । तद्वेति भवति वीतय ऽइति समन्तिक मिव ह वा ऽइमेऽग्रे लोका आसुरित्युन्मृश्या हैव द्यौरास ॥ ते देवाऽअकामयन्त । कथन्नु न इमे लोका वितराऽ स्युः कथन्न इदं वरीय इव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्यनयन् वीतय ऽइति तऽइमे विदुरं लोकास्ततो देवेभ्यो वरीयो ऽभवद वरीयो ह वा ऽअस्मै भवति यस्यैवं विदुष एता मन्वाह वीतयऽइति ॥ गृणानो हव्यदातयऽइति । यजमानो वै हव्यदाति गृणानो यजमानायेत्येवैतदाह नि होता सत्सि बर्हिषीत्यग्निर्वै होतायं लोको बर्हिरग्निमेवैतल्लोकेऽग्निं दधाति सोऽय मग्निर्लोके ऽग्निहितः सेषेम मेव लोक मभ्यनूक्त ममेवैतया लोकं जयति यस्यैवं विदुष एता मन्वाह ॥

अध्या० ३। व० २२॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः। यजुर्वेदे, अध्या० ३२।
मं० १॥ इत्यादिभ्य एकस्य सतः परब्रह्मणः अग्न्यादीनि बहूनि नामानि सन्तीति वेदितव्यम्] त्वं 'वीतये' विद्यादिशुभगुणव्याप्तये 'हव्यदातये' हव्यस्य दातव्यस्य शुभकर्मफलस्य दानाय च अस्माभिः 'गृणानः' स्तूयमानः सन्, अस्मान् सद्गुणानुपदिशन् वा 'आयाहि' अस्माकं समीपमागच्छ। आगत्य च 'होता' होमनिष्पादकः, सुखस्य दाता वा त्वं 'बर्हिषि' बृंहति वर्धते ज्ञानं यत्र तस्मिन् यज्ञे 'निषत्सि' निषीद, विराजस्व। अनेन मन्त्रेण ईश्वरस्य प्रत्यक्षाह्वानम्, [प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना। नि० ७।२।२] इति मन्त्रस्य प्रत्यक्षकृतार्थत्वात्।

**निरुक्तम्।** अग्निः कस्मात्॥ अग्रणीर्भवति। अग्रं यज्ञेषु प्रणीयते। अङ्गं नयति सन्नममानः॥ अक्नोपनो भवतीति स्थौलाष्ठीवि र्न क्नोपयति न स्नेहयति॥ त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतादक्ताद्दग्धाद्वा नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहते र्वा नीः परः॥ ७।१४।३, ४, ५, ६॥ गृणातिः अर्चतिकर्मा॥ ३।१४।१॥ दातिः दानकर्मा॥ ३।१९।१२॥

## अथ द्वितीया।

त्वमग्नेयज्ञानामित्यृचो बार्हस्पत्यो भरद्वाज ऋषिः। सामगानस्य सुपर्ण ऋषिः, सौपर्णं च नाम (सौपर्णञ्च। आ० ब्रा०) गायत्री वर्द्धमाना। अग्निः। (सौपर्णं भवति स्वर्गस्य लोकस्य समष्ट्यै। ता० म० ब्रा० १४।३।९) इति स्वर्गलोक-समष्टिकामाय अस्या विनियोगः।

१ २ ३ २ ३ २ ३ १ २ ३ २
त्वमग्ने यज्ञानाᳪं होता विश्वेषाᳪं हितः ।

३ २ ३ १ २ ३ १ २
देवेभि र्मानुषे जने ॥ २ ॥ (क)

**पदपाठः ।** त्वम् १ । अग्ने सं० । यज्ञानाम् ६ । होता १ । विश्वेषाम् ६ । हितः १ । देवेभिः ३ । मानुषे ७ । जने ७ ।

**अन्वयः ।** [हे] अग्ने ! त्वं विश्वेषां यज्ञानां होता (ख)। [एवम्भूतस्त्वं] मानुषे जने देवेभिः हितः [असि] ।

**आधियाज्ञिकम् ।** हे 'अग्ने' ! 'त्वं' 'विश्वेषां' सर्वेषां 'यज्ञानां' श्रौतस्मार्त्तादीनां 'होता' होमनिष्पादनशीलः। एवम्भूतस्त्वं 'मानुषे' मननशीले 'जने' यजमाने 'देवेभिः' ऋत्विग्भिः 'हितः' गार्हपत्याहवनीयदक्षिणाग्निरूपेण स्थापितः असि ।

**आध्यात्मिकम् ।** हे 'अग्ने' परमात्मन् ! 'त्वं' 'विश्वेषां' सर्वेषां 'यज्ञानां' सङ्गन्तव्यानां व्यवहाराणां, श्रेष्ठतमानां कर्मणां वा [ यज्ञो वै श्रेष्ठतमं कर्म । श० ब्रा०° १।५।४।५ ] 'होता' स्वीकर्त्ता फलदाता च । एवम्भूतस्त्वं 'मानुषे' मननशीले 'जने' यज्ञकर्त्तरि मादृशि जने 'देवेभिः' दिव्यगुणैः ध्यानधारणा समाधिभिः 'हितः' धारितः असि ।

**निरुक्तम् ।** यज्ञः कस्मात् प्रख्यातं यजति कर्मेति नैरुक्ताः। याच्ञो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वा ॥ ३।१९।६ ॥ विश्वं बहुनामसु ॥ ३।१३।१ ॥

देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा ॥७।१५।१॥

---

(क) ऋग्वेदे, अष्ट० ४। अध्या० ५। व० २१ ॥

(ख) यद्वा यज्ञानां विश्वेषां [देवानां] होतेति। "यज्ञानां' यष्टव्यानां 'विश्वेषां' देवानामिति 'होता' आह्वाता। सा० ॥

## अथ तृतीया।

अग्निन्दूतमित्यृचः काण्वोमेधातिथिर्ऋषिः। सामगानस्य बृहन्नाम भरद्वाजऋषिश्च (बृहद्वा भरद्वाजम्। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु (बृहत्स्वर्गकामाय सन्धिं कुर्यात्। ता० म० ब्रा० ८।१।३०) इति।

३ २ ३ १ २ ३ १ ३ ३ १ २

**अग्निन्दूतं वृणीमहे होतारं विश्ववेदसम्।**

३ २ ३ १ २ ३ १ २

**अस्य यज्ञस्य सुक्रतुम्॥ ३॥ (क)**

**पदपाठः।** अग्निम् २। दूतम् २। वृणीमहे क्रि०। होतारम् २। विश्ववेदसम् २। अस्य ६। यज्ञस्य ६। सुक्रतुम् २।

**अन्वयः।** दूतं होतारं विश्ववेदसम् अस्य यज्ञस्य सुक्रतुम् अग्निं वृणीमहे।

**आधियाज्ञिकम्।** 'दूतं' दावयति गमयति देशान्तरं पदार्थान् तं देवानां दौत्ये विनियुक्तम् [अग्निरेव देवानां दूत आस। श० ब्रा० १।३।३।३४, ३५ (ख)] 'होतारं' देवानामाह्वातारं 'विश्व-

---

(क) ऋग्वेदे, अष्ट० १। अध्या० १। व० २२॥

(ख) श० ब्रा० १।३।३।३४,३५ एवमस्ति:—सोऽन्वाह। अग्निं दूतं वृणीमह ऽ इति देवाश्च वा ऽ असुराश्चोभये प्राजापत्याः पस्पृधिरे तान् स्पर्द्धमानान् गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा पृथिवीयꣳ हैव तदन्तरा तस्थौ त ऽ उभय ऽ एव विदाञ्चक्रुर्यतरान् वै न इय मुपावर्त्स्यति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभय ऽ एवोपमन्त्रयाञ्चक्रिरे ऽग्निरेव देवानां दूत आस सहरक्षा इत्यसुररक्षस मसुराणाꣳ साग्निमेवानुप्रेयाय तस्मादन्वाहाग्निं दूतं वृणीमह ऽ इति स हि देवानां दूत आसीद्धोतारं विश्ववेदसमिति॥ तदु हैके ऽन्वाहुः। होता यो विश्ववेदस इति नेदर मित्यात्मानं ब्रवाणीति तदु तथा न ब्रूयान् मानुषꣳ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेदृद्धं यज्ञे करवाणीति तस्माद्यथैवर्चानूक्त मेवमेवानुब्रूयाद्धोतारं विश्ववेदस मित्येवास्य यज्ञस्य सुक्रतु मित्येष हि यज्ञस्य सुक्रतुर्यदग्निस्तस्मादाहास्य यज्ञस्य सुक्रतुमिति सेयं देवानुपाववर्त्त ततो देवा अभवन् परासुरा भवति ह वा ऽ आत्मना परास्य सपत्ना भवन्ति यस्यैवं विदुष एता मन्वाहुः॥

वेदसं' यज्ञनिष्पादकत्वेन सर्वधनप्रापकम् 'अस्य' प्रवर्तमानस्य 'यज्ञस्य' यागकर्मणः 'सुक्रतुं' शोभनसम्पादकम् 'अग्निं' 'वृणीमहे' आदध्मो वयमृत्विज इति।

**आध्यात्मिकम्।** 'दूतं' दूनोति उपतापयति नाशयति त्रितापं तं 'होतारं' सुखस्य दातारं 'विश्ववेदसं' सर्वधनं, सर्वज्ञं वा 'अस्य' प्रवर्त्तमानस्य 'यज्ञस्य' यष्टव्यस्य कर्मणः 'सुक्रतुं' निष्पादकत्वेन शोभनकर्माणं, शोभनप्रज्ञं वा 'अग्निं' परमात्मानं (वृणीमहे) सम्भजामहे, उपास्महे वयमुपासका इति।

**निरुक्तम्।** दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा ॥५।१।२॥ वेद इति धननाम ॥ ३।६।८ ॥ क्रतुरिति कर्मनाम ॥ ३।१।१ ॥ क्रतुरिति प्रज्ञानाम ॥ ३।१३।१७ ॥

## अथ चतुर्थी।

अग्निर्वृत्राणीत्यृचो भरद्वाज ऋषिः। त्रीणि सामानि, श्रुतर्षाचर्षिः (श्रौतर्षाणित्रीणि। आ० ब्रा०) गायत्री। अग्निः।

विनियोगस्तु (अग्निर्वृत्राणि जङ्घनत् त्वं सोमासि सत्पतिरिति वार्त्रघ्नाविव कुर्याद्वृत्रं वा एष हन्ति यं यज्ञ उपनमति। ऐ० ब्रा० १।१।४) इति वृत्र (रोग-ताप-विघ्न) नाशाय अग्निस्तुती।

३ २ ३ १ २ ३ १ २ ३ १ २

**अग्नि र्वृत्राणि जङ्घनद् द्रविणस्यु र्विपन्यया।**

१ २ ३ १ २ २ र

**समिद्धः शुक्र आहुतः ॥ ४ ॥ (क)**

**पदपाठः।** अग्निः १। वृत्राणि २। जङ्घनत् क्रि०। द्रविणस्युः १। विपन्यया ३। समिद्धः १। शुक्रः १। आहुतः १।

---

(क) ऋग्वेदे, अष्ट० ४। अध्या० ५। व० २७॥

**अन्वयः ।** द्रविणस्युः समिद्धः शुक्रः आहुतः अग्निः विपन्यया [स्तूयमानः सन्] वृत्राणि जङ्घनत् ।

**आधियाज्ञिकम् ।** 'द्रविणस्युः' यजमानस्य यज्ञफलरूप-विविधधनमिच्छुः 'समिद्धः' सम्यक् प्रदीप्तः 'शुक्रः' शुद्धः 'आहुतः' आ समन्ताद् ऋत्विग्भिः कृतहोमः 'अग्निः' 'विपन्यया' विविध स्तुत्या स्तूयमानः सन् 'वृत्राणि' आवरकाणि रोगादीनि 'जङ्घनत्' भृशं हन्तु, नाशयतु ।

**आध्यात्मिकम् ।** ( द्रविणस्युः ) स्तोतॄणामात्मबलप्राप्त्यादि-धनमिच्छुः ( समिद्धः ) सम्यक् प्रकाशितः प्रसादितः प्रत्यक्षीकृतश्च ( शुक्रः ) शुद्धस्वरूपः ( आहुतः ) मनसि योगानुष्ठानेन सम्यग्धृतः ध्यानेन धारितश्च ( अग्निः ) परमात्मा ( वृत्राणि ) ईश्वरप्रणिधानस्य आवरकाणि दुरितानि अविद्यातमांसि वा ( जङ्घनत् ) भृशं हन्तु, नाशयतु ।

**निरुक्तम् ।** वृत्रो वृणोतेर्वा वर्त्ततेर्वा वर्द्धतेर्वा 'यद-वृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्त्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्द्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ॥ २।१७।१ ॥ वृत्रं धननाम (क) ॥ ३।९।९ ॥ द्रविणमिति धननाम ॥ ३।९।७ ॥ शुक्रं शोचतेर्ज्वलति कर्मणः ८।११।२ ॥

## अथ पञ्चमी ।

प्रेष्ठं वो इत्यृच उशना ऋषिः । चत्वारि सामगानानि, उशना ऋषिश्च ( सर्वाणि वौशनानि । आ० ब्रा० ) गायत्री । अग्निः । विनियोगस्तु ( प्रेष्ठं वो अतिथि मित्यातिथ्यस्यैव तद्रूपं क्रियते । ता० म० ब्रा० १४।१२।१ ) इति आहितस्याग्नेरातिथ्य स्तुतौ । विशेषस्तु तत्रैव ब्राह्मणे द्रष्टव्यः ।

---

(क) अत्र निरुक्तानुसारं 'वृत्राणि, जङ्घनत् = धनानि गमयतु' इत्यप्यर्थोऽनुमीयते । ( हनहिंसागत्योः अ० प० अनि० हन्ति ) अस्य यङ्लुकि लिङर्थे लेट् अडभावश्च ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २
प्रेष्ठं वो अतिथिं स्तुषे मित्र मिव प्रियम्।
२ ३ २ ३ १ २ २२
अग्ने रथं न वेद्यम् ॥ ५ ॥ (क)

**पदपाठः।** प्रेष्ठम् २। वः २। अतिथिम् २। स्तुषे क्रि०। मित्रम् २। इव अ०। प्रियम् २। अग्ने सं०। रथम् २। न अ०। वेद्यम् २।

**अन्वयः।** [हे] अग्ने! प्रेष्ठम् अतिथिं मित्रमिव प्रियं रथं न वेद्यं वः (=त्वां) स्तुषे।

**आधियाज्ञिकम्।** हे 'अग्ने'! 'प्रेष्ठं' प्रियतमम् 'अतिथिं' सततं देवेभ्यो हविः प्रदातुं गच्छन्तम्, अतिथिवत् पूज्यं वा 'मित्रं' बन्धुम् 'इव' 'प्रियं' हितकारं 'रथं' 'न' इव, यथा रथेन साधनभूतेन धनानि प्राप्यन्ते तथा 'वेद्यं' लाभहेतुं 'वः' त्वां, वचनव्यत्ययः 'स्तुषे' स्तौमि।

**आध्यात्मिकम्।** हे 'अग्ने' परमात्मन्! 'प्रेष्ठं' प्रियतमम् 'अतिथिम्' अतति सततं गच्छति तं सर्वव्यापकम्, अतिथिवत्पूज्यं वा 'मित्रं' बन्धुम् 'इव' 'प्रियम्' अनुकूलं 'रथं' रमणसाधनं 'न' इव 'वेद्यं' लब्धव्यं ज्ञातव्यञ्च 'वः' त्वां 'स्तुषे' स्तौमि, उपासे।

**निरुक्तम्।** अतिथिरभ्यतितो गृहान् भवति। अभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा ॥ ४।५।१ ॥

...उपमार्थे...। इवेति भाषायाञ्च। अन्वध्यायञ्च ॥ १।४।४, ५, ६ ॥ रथो रंहते र्गतिकर्मणः। स्थिरतेर्वा स्याद्विपरीतस्य। रममाणोऽस्मिंस्तिष्ठतीतिवा, रपते र्वा, रसतेर्वा ॥ ८।११।२ ॥

नेति प्रतिषेधार्थीयो भाषायाम्। उभय॰ (प्रतिषेधोपमार्थीय) मन्वध्यायम् ॥ १।४।७, ८ ॥

---

(क) ऋग्वेदे; अष्ट० ६। अध्या० ६। व० ५। 'अग्ने' इत्यत्र 'अग्नि'मिति पाठः।

## अथ षष्ठी ।

त्वं नो अग्न इत्यृच आङ्गिरसः सुदीतिः पुरुमीढ़ो वा ऋषिः उभौ वा । द्वे सामनी सांवर्गवार्त्रघ्ने इन्द्रस्यर्षिः ( इन्द्रस्य सांवर्गवार्त्रघ्ने द्वे । आ० ब्रा० ) । गायत्री । अग्निः । विनियोगस्तु वार्त्रघ्नसामवत्त्वादग्निर्वृत्राणीतिवत् ( ४ मं० ) ।

१ २ ३ १ २ ३ १ २र ३ १ २
**त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।**
३ २ ३ १ र २ र
**उत द्विषो मर्त्यस्य ॥ ६ ॥ (क)**

**पदपाठः** । त्वम् १ । नः २ । अग्ने सं० । महोभिः ३ । पाहि क्रि० । विश्वस्याः ५ । अरातेः ५ । उत अ० । द्विषः ५ । मर्त्यस्य ६ ।

**अन्वयः** । [हे] अग्ने ! त्वं महोभिः [तुष्टः] विश्वस्याः अरातेः उत मर्त्यस्य द्विषः नः पाहि ।

**आधियाज्ञिकम्** । हे 'अग्ने' ! 'त्वं' 'महोभिः' अस्मत्कृतपूजाभिः तुष्टः 'विश्वस्याः' सर्वस्य 'अरातेः' शत्रोः रोगादेरिति 'उत' अपि च 'मर्त्यस्य' अस्मदादेर्मनुष्यस्य 'द्विषः' शत्रोः अनावृष्टिदुर्भिक्षादिभ्यः 'नः' अस्मान् 'पाहि' रक्ष ।

**आध्यात्मिकम्** । हे 'अग्ने' परमात्मन् ! 'त्वं' 'महोभिः' अस्मत्कृतपूजाभिः, अग्नावाहुतिदानमेव तत्पूजा ताभिः तुष्टः 'विश्वस्याः' सर्वस्य 'अरातेः' शत्रोः अविद्यादेरज्ञानादेश्च 'उत' अपि च 'मर्त्यस्य' अस्मदादेर्मनुष्यस्य 'द्विषः' शत्रोः अनावृष्टिदुर्भिक्षादिभ्यः 'नः' अस्मान् 'पाहि' रक्ष ।

**निरुक्तम्** । अरातयोऽदानकर्माणो वाऽदानप्रज्ञा वा ॥ ३।११।१ ॥ मर्त्या इति मनुष्यनाम ॥ ३।७।१ ॥

---

(क) ऋग्वेदे, अष्ट० ६ । अध्या० ५ । व० ११ ॥

## अथ सप्तमी ।

एह्यूषु ब्रवाणीत्यृचो बार्हस्पत्यो भरद्वाज ऋषिः। शौनःशेपं साम साकमश्वस्यर्षिः (साकमश्वस्य शौनःशेपे सामनी द्वे। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु (एह्यूषु ब्रुवाणित इत्येह्विवत्यो भवन्ति तृतीयस्याह्न उपहवाय सन्तत्यै। ता० म० ब्रा० ११।११।१) इति सायंसवने अग्नग्राह्वाने।

२ ३ १र २ र ३ १ ३ १ २ ३ १ २
एह्यूषु ब्रवाणि ते ऽग्न इत्थे तरा गिरः।
२ १ २ ३ १ २
एभि र्वर्द्धसि इन्दुभिः ॥ ७ ॥ (क)

पदपाठः। एहि क्रि०। ऊ अ०। सु अ०। ब्रवाणि क्रि०। ते ४। अग्ने सं०। इत्था अ०। इतराः २। गिरः २। एभिः ३। वर्द्धसि क्रि०। इन्दुभिः ३।

अन्वयः। [हे] अग्ने! एहि। ते ऊ (=इत्येताः) इतराः गिरः इत्था सु ब्रवाणि [प्रार्थयानि तन्नाशाय]। [आगत्य च] एभिः इन्दुभिः वर्द्धसि।

आधियाज्ञिकम्। हे 'अग्ने'! 'एहि' अस्मद्यज्ञं प्रति आगच्छ। 'ते' तुभ्यम् 'ऊ' इत्येताः 'इतराः' मनोवचसोः असावधानाः [एह्यूषु ब्रवाणि ते ऽग्न इत्येतरा गिर इत्यसुर्या ह वा इतरा गिरः। ऐ० ब्रा० ३।५।५] (ख) 'गिरः' स्तुतिरूपा वाचः 'इत्था' अनेन प्रकारेण 'सु' सुष्ठु 'ब्रवाणि' उच्चारयाणि, प्रार्थयानि तन्नाशाय। अनेन मनोवचसोः स्थैर्य्यं प्रार्थ्यते। आगत्य च 'एभिः' एतैः 'इन्दुभिः' सोमैः 'वर्द्धसि' वर्द्धस्व। स्तूयमाना हि देवता वर्द्धन्ते।

आध्यात्मिकम्। हे 'अग्ने' परमात्मन्! 'एहि' आगच्छ,

---

(क) ऋग्वेदे, अष्ट० ४। अध्या० ५। व० २४ ॥ 'वर्द्धसी'त्यत्र 'वर्द्धास' इति पाठः।
(ख) असुर्य्यो मनोवचसोरसाम्यम्।

अस्माकं हृदि विराजस्व। 'ते' तुभ्यम् 'ऊ' इत्येताः 'इतराः' मनोवचसोः असावधानाः 'गिरः' स्तुतिरूपा वाचः 'इत्था' अनेन प्रकारेण 'सु ब्रवाणि' साधूच्चारयाणि, प्रार्थयानि तन्नाशाय। अनेन मनोवचसोः स्थैर्यं प्रार्थ्यते। आगत्य च 'एभिः' एतैः 'इन्दुभिः' ध्यानाभ्यासरसैः, यज्ञैः वा 'वर्द्धसि' प्रकाशितो भवेति।

**निरुक्तम्।** इत्थामुथेत्येन व्याख्यातम् ॥ ५।५।५ ॥ गौरिति-वाङ्नामसु ॥ २।२३।१ ॥ गिरा गीत्या स्तुत्या ॥ ६।२४।१ ॥ इन्दुरिति यज्ञ नाम ॥ ३।१९।५ ॥ इन्दुरिन्धे रुनत्ते र्वा ॥१०।४१।२॥

## अथाष्टमी।

आ ते वत्स इत्यृचः काण्वो वत्स ऋषिः। काण्वं साम ( वत्सस्य काण्वस्य। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु ( आष्कारणिधनं काण्वं प्रतिष्ठाकामाय। ता० म० ब्रा० ८।२।१ ) इति दुरितनाशकामयज्ञस्य प्रतिष्ठायाम्।

१ २ ३ १ २र ३ १ २ ३ १ २
**आ ते वत्सो मनो यमत् परमाच्चित् सधस्थात्।**
२ ३ १ २ ३ २
**अग्ने त्वां कामये गिरा ॥ ८ ॥ (क)**

**पदपाठः।** आ अ०। ते ६। मनः २। यमत् क्रि०। परमात् ५। चित् अ०। सधस्थात् ५। अग्ने सं०। त्वाम् २। कामये क्रि०। गिरा ३।

**अन्वयः।** वत्सः ते मनः परमात् चित् सधस्थात् गिरा आयमत्। [ हे ] अग्ने ! त्वां कामये।

**आधियाज्ञिकम्।** 'वत्सः' यजनशीलः 'ते' तव 'मनः' प्रवृत्तिं 'परमात्' उत्कृष्टात् 'चित्' अपि 'सधस्थात्' सहस्थानात् व्योमवत्

---

(क) ऋग्वेदे, अष्ट ५। अध्या० ८। व० ३६। 'कामये' इत्यत्र 'कामया' इति पाठः। यजुः, अध्या० १२। सं० ११५।

सर्वव्यापकात् [ परमे व्योमन्। ऋ० २।३।२१ ] 'गिरा' वेदवाग्-रूपया स्तुत्या 'आयमत्' आगमयति आकर्षति। हे 'अग्ने'! 'त्वां' 'कामये' त्वदीयं मनः मय्येव नियच्छामीति॥ धेनुः सर्वमन्यद् विहाय पुत्रप्रेम्णा वत्से एव यथा मनो दधाति न तथान्यत्र कुत्रापि। वत्स एव सर्वदा तन्मनः आकर्षति। अतोऽत्र मन्त्रे वत्सशब्देन यजनशीलो बोध्यते इत्यन्ये।

**आध्यात्मिकम्।** 'वत्सः' उपासकः 'ते' तव 'मनः' 'परमात्' उत्कृष्टात् 'चित्' अपि 'सधस्थात्' सहस्थानात् व्योमवत् सर्वव्यापकात् 'गिरा' स्तुत्या 'आयमत्' आकर्षति। हे 'अग्ने' परमात्मन्! 'त्वां' 'कामये' त्वदीयं मनः मय्येव नियच्छामीति।

**निरुक्तम्।** मनो मनोतेः॥ ४।५।१॥ सधस्थे सहस्थाने॥ ३।१५।१॥

## अथ नवमी।

त्वामग्ने पुष्करादित्यृचो भरद्वाज ऋषिः। आर्षेयं साम, अग्निरृषिः ( अग्नेरार्षेयम्। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु मन्त्रार्थगम्यो यज्ञेऽरण्योः सकाशादग्नेर्निमन्थनम्।

१ २ ३ १ २ ३ १ २र ३ १ २
**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत।**
३ १र २र ३ १ २
**मूर्ध्नो विश्वस्य वाघतः॥ ९॥ (क)**

**पदपाठः।** त्वाम् २। अग्ने सं०। पुष्करात् ५। अधि अ०। अथर्वा १। निरमन्थत क्रि०। मूर्ध्नः ५। विश्वस्य ६। वाघतः ५।

**अन्वयः।** [हे] अग्ने! [यथा] अथर्वा विश्वस्य वाघतः मूर्ध्नः पुष्करात् अधि त्वां निरमन्थत [तथाहं यज्ञार्थमरण्योः त्वां निर्मन्थामि]।

---

(क) ऋग्वेदे, अष्ट० ४। अध्या० ५। व० २३।

**आधियाज्ञिकम्।** हे 'अग्ने'! यथा 'अथर्वा' निश्चलः परमात्मा 'विश्वस्य' चराचरस्य सर्वस्य जगतः 'वाघतः' वाहकात् 'मूर्द्ध्नः' मूर्द्धवद्धारकात् सर्वाधारभूतात् 'पुष्करात्' (क) आकाशात् 'अधि' अन्तः 'त्वां' 'निरमन्थत' उत्पादितवान्, अहमृत्विगपि तथैव यज्ञार्थमरण्योः सकाशात्त्वां निर्मन्थामि।

**आध्यात्मिकम्।** हे 'अग्ने' परमात्मन्! 'अथर्वा' संशयरहितः उपासकः [अपि संराधने प्रत्यक्षानुमानाभ्याम्। वेदान्ते, अध्या० ३। पा० २। सू० २४] 'विश्वस्य' चराचरस्य सर्वस्य जगतः 'वाघतः' वाहकात् 'मूर्द्ध्नः' मूर्द्धवद्धारकात् सर्वाधारभूतात् 'पुष्करात्' परमात् स्थानात् हृदयाकाशात् [तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। ऋग्वेदे, अष्ट० १। अध्या० २। व० ७] ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन तिष्ठति। गीता, अध्या० १८। श्लो० ६१] 'अधि' अन्तर्मनसि 'त्वां' 'निरमन्थत' उत्पादितवान्, श्रवणमननिदिध्यासनैर्विविच्य प्रत्यक्षीकृतवान् [श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः] तथाहमपि हृद्देशे त्वामनुभवामि।

**निरुक्तम्।** पुष्करमित्यन्तरिक्षनाम ॥ २।१०।३ ॥ अथर्वाणोऽथनवन्तः। थर्वतिश्चरतिकर्मा तत्प्रतिषेधः ॥ ११।१८।१ ॥

## अथ दशमी।

अग्ने विवस्वदित्यृचो वामदेवऋषिः। सौमित्रं वानूपं साम, वाध्र्यश्वः सुमित्रो वाऽनूप ऋषिः (वाध्र्यश्वस्य वाऽनूपस्य। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु (पशूनां भूमानमश्नुत आनूपेन

(क) तैत्तिरीय ब्राह्मणे, कां० १। प्र० १ अ० ३। एवमस्ति :—

आपो वा इदमग्रे सलिलमासीत्। तेन प्रजापतिरश्राम्यत्। कथमिदँ स्यादिति। सोऽपश्यत्पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तत्। यस्मिन्निदमधितिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्। तत्पृथिव्यै पृथिवीत्वम् ॥ इत्यतः पुष्करं = पुष्करपर्णं सा०।

तुष्टुवान:। ता० म० ब्रा० १३।३।१७) इति पशुवृद्धिकामयज्ञायाग्निस्तुती।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अग्ने विवस्वदाभरास्मभ्यमूतये महे।
३ १र २र ३ १
देवो ह्यसि नो दृशे॥ १०॥

**पदपाठ:।** अग्ने सं०। विवस्वत् २। आभर क्रि०। अस्मभ्यम् ४। ऊतये ४। महे ४। देव: १। हि अ०। असि क्रि०। न: ६। दृशे ४।

**अन्वय:।** [हे] अग्ने! [त्वं] महे ऊतये विवस्वत् अस्मभ्यम् आभर। हि न: दृशे देव: असि।

**आधियाज्ञिकम्।** हे 'अग्ने! त्वं 'महे' महते 'ऊतये' रक्षणाय 'विवस्वत्' स्वर्गादिलोकेषु विशेषेण निवासस्य हेतुभूतं यज्ञादिकं कर्म 'अस्मभ्यम्' 'आभर' आहर सम्पादय। 'हि' यत: 'न:' अस्माकं 'दृशे' दर्शनाय 'देव:' प्रकाशक: 'असि'।

**आध्यात्मिकम्।** हे 'अग्ने' परमात्मन्! 'त्वं' 'महे' 'ऊतये' रक्षणाय 'विवस्वत्' स्वर्गादिपुण्यलोकेषु विशेषेण निवासस्य हेतुभूतं यज्ञादिकं कर्म 'अस्मभ्यम्' 'आभर' आहर। 'हि' यत: 'न:' अस्माकं 'दृशे' दर्शनाय 'देव:' प्रकाशक: 'असि' सदैव विराजमानोऽसि तथाप्यविद्यावृतबुद्धयो वयं त्वां न पश्यामः।

**निरुक्तम्।** ऊतिरवनात्॥ ५।३।३॥ महो महान्॥ ८।२५।१॥ दृशे दर्शनाय॥ १२।१५।२॥

# अथ व्याकरणम्।

अग्निः (४)—'अगि' गतौ भ्वा० प० से० अङ्गति, अस्मात् 'अङ्गे र्नं लोपश्च' उ० ४।५० इति नि प्रत्ययो नुमो नलोपश्च। अङ्गति गच्छति ( गतिर्ज्ञानम् ) जानातीत्यग्निः १मा १व०।

अग्निम् (३)—अग्निशब्दस्य २या १व०।

अग्ने (१,२,५,६,७,८,९,१०)—अग्निशब्दस्य सं० १व०।

अतिथिम् (५)—'अत' सातत्यगमने भ्वा० प० से० अतति, अस्मात् 'ऋतन्यञ्जि' उ० ४।२ इति इथिन्। अतति सततं गच्छति भ्राम्यति वा ऽतिथिः। न विद्यते आगमनतिथिरस्येति च व्युत्पत्यन्तरम्। तम् २या १व०।

अथर्वा (९)—अ+थर्व चरणे+वनिप् 'स्नामदि०' उ० ४।११३ इति। वलोपो विकल्पेन। न थर्वति न चरतीति अथर्वा निश्चलः। यद्वा अथ—ऋ गतौ+वनिप्। अथ लोकमङ्गलाय ऋच्छति गच्छतीति अथर्वा—१मा १व।

अधि (९)—'डुधाञ्' धारणपोषणयो र्दाने च जु० उ० अनि० दधाति, धत्ते, अस्मात् 'उपसर्गे घोः किः' ३।३।९२ इति किः 'व्यत्ययो बहुलम्' ३।१।८५ इत्यनुपसर्गेऽपि। ततो नञ्। 'प्राग्रीश्वरान्निपाताः' १।४।५६ इत्यव्ययसंज्ञा।

अरातिः (६)—'रा' दाने अ० प० अनि० राति, अस्मात् क्तिन्। नास्ति राति र्दानं यस्येत्यरातिर्न किमपि दाता। यद्वा न रातिरदानमित्यरातिः। तस्याः ५मी० १व०।

असि (१०)—'अस' भुवि अ० प० से० अस्ति, अस्य लटि मध्यम पु० १व०।

अस्मभ्यम् (१०)—'असु' क्षेपणे दि० प० से० अस्यति, अस्मात् 'युष्यसिभ्यां मदिक्' उ०१।१३९ इति मदिक्। अस्यति चिपतीत्यस्मच्छब्दस्य ४ र्थी बहु०।

अयम् (३)—'इदि' परमैश्वर्ये भ्वा० प० से० इन्दति, अस्मात् 'इन्देः कमिन्नलोपश्च' उ० ४।१५७ इति कमिन् नलोपश्च। इन्दति ईष्टे द्योतते इति इदम्। पुंसि अयम्। स्त्रियामियम्। ६ष्ठी १व० 'हलिलोपः ७।२।११३ इति इदो लोपः।

आ भर (१०)—'हृञ्' हरणे भ्वा० उ० अनि० हरति, हरते, आङ्पूर्वस्यास्य 'आहर' इत्यत्र 'हृग्रहोर्भश्छन्दसि' वा० ३।१।८४ इति हस्य भः।

आ यमत् (८)—'यम' उपरमे भ्वा० प० अनि० यच्छति, आङ्पूर्वादस्यधातोः 'छन्दसि लुङ्लङ्लिटः' ३।४।६ इति लडर्थे लङ्। 'बहुलं छन्दस्यमाङ्योगेऽपि' ६।४।७५ इत्यडभावः॥

आ याहि (१)—'या' प्रापणे अ० प० अनि० याति, आङ्पूर्वस्यास्य धातोः लोटि सेर्हिः मध्यम पु० १व०।

आहुत: (४)—'हु' दानादनयो जु० प० अनि० जुहोति, आङ्पूर्वादिति धातोर्निष्ठात:। १मा० १व०।

इतरा: (७)—'इण्' गतौ अ० प० अनि० एति, अस्मात् 'निष्ठा' ३।२।१०२ इति क्त: इत:। रा धातो: [अराते:] 'आतोऽनुपसर्गे क:' ३।२।३ इति क:। इतं गतं पृथग्भूतमन्यं रातिरिति इतर:। स्त्रियामितरास्ता: २या बहु०।

इत्था (७)—इदं शब्दात् [अस्य] 'था हेतौ च च्छन्दसि' ५।३।२६ इति था प्रत्यय:। 'स्वरादि०' १।१।३७ इति अव्ययसंज्ञा।

इन्दुभि: (७)—'ऊन्दी' क्लेदने रु० प० से० उनत्ति, अस्मात 'उन्दे रिच्चादे:' उ० १।२ इति उकारस्य इकार: उप्रत्ययश्च। उनत्ति क्लेदयतीति इन्दुस्तै: २या बहु०।

इव (५)—'इवि' व्याप्तौ भ्वा० प० से० इन्वति, अस्मात् 'इगुपध० ३।१।१३५ इति क:। 'व्यत्ययो बहुलम्' ३।१।८५ इति धातोरिदित्त्वेऽपि न नुम्। 'स्वरादि०' १।१।३७ इत्यव्ययसंज्ञा। इन्वति लक्षणं व्याप्नोति इति इव उपमार्थ:।

उत (६)—उङ् शब्दे भ्वा० आ० अनि० अवते, अस्मान्निष्ठात:। अव्ययसंज्ञा।

ऊ (७)—उङ् धातो: [उत] क्विप्। अवते शब्दायते इति उ। अव्ययसंज्ञा। 'निपातस्य च' ६।३।१२६ इति दीर्घ:।

ऊतये (१०)—'अव' रक्षणे भ्वा० प० से० अवति, अस्मात् 'ऊति यूति०' ३।३।९७ इति क्तिन्। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ६।४।२० इत्यूठ्। तस्मै ४र्थी १व०।

एभि: (७)—पुंसि इद शब्दस्य [अस्य] ३या वहु०।

एहि (७)—आङ् पूर्वात् इण् धातो: [इतरा:] लोटि मध्यम पु० १व।

कामये (८)—'कमु' कान्तौ भ्वा० आ० से० कामयते, अस्य लटि उत्तम पु० १व०।

गिर: (७)='गॄ' निगरणे तु० प० से० गिरति, अस्मात् क्विप्। 'ॠत इद्धातो:' ७।१।१०० इतीकार:। रपर:। गिरतीति गीस्ता० २या बहु०।

गिरा (८)—गी:शब्दस्य ३या १व०।

गृणान: (१)—'गॄ' शब्दे क्र्या० प० से० गृणाति, 'प्वादीनां ह्रस्व:' ७।३।८० इति ह्रस्व:। 'लट: शतृशानचा'० ३।२।१२४ इति शानच्। 'क्र्यादिभ्य: श्ना' ३।१।८१ इति श्ना। गृणान: १मा १व०।

चित् (८)—'चिञ्' चयने स्वा० उ० अनि० चिनोति, चिनुते, अस्मात् क्विप्। 'ह्रस्वस्य पिति०' ६।१।७१ इति तुक्। अव्ययसंज्ञा।

जङ्घनत् (४)—'हन' हिंसागत्यो: अ० प० अनि० हन्ति, अस्य यङ्लुकि द्वित्वे मनुनासिक लोप: 'अनुदात्तोपदेश०' ६।४।३७ इति। 'नुगतोऽनुनासिकान्तस्य' ७।४।८५ इति नुक्। चुत्वकुत्वे। 'लिङर्थे लेट्' ३।४।७। 'इतश्च लोप:० ३।४।९७ इति तिप इ लोप:। 'लेटोऽडाटौ' ३।४।९४ इति अट्। जङ्घनत् =हन्यात्।

जने (२)—'जनी' प्रादुर्भावे दि० आ० अनि० जायते, अस्मात् 'नन्दिग्रहि०' ३।१।१३४ इत्यच्। जायते जनयतीति वा जनस्तस्मिन् ७मी १व०।

ते (७)—'युष्' सेवायाम् सौत्रो धातुः योषति, अस्मात् 'युष्यसिभ्यां मदिक्' उ० १।१३९ इति मदिक्। योषति सेवते इति युष्मच्छब्दस्य ४र्थी १व० तुभ्यमित्यस्य स्थाने 'तेमयावेकवचनस्य' ८।१।२२ इति ते आदेशः।

ते (८)—युष्मच्छब्दस्य ६ष्ठी १व० तवेत्यस्य स्थाने ते आदेशः।

त्वम् (२,६)—युष्मच्छब्दस्य १मा १व० सौ 'त्वाहौ सौ' ७।२।९४ इति त्वादेशः। 'ङे प्रथमयोः' ७।१।२८ इति सोरम्। 'शेषे लोपः' ७।२।९० इत्यन्त लोपः। 'अमि पूर्वः' ६।१।१०७ इति पूर्वरूपम्॥

त्वाम् (८,९)—युष्मच्छब्दस्य २या १व०।

दूतम् (३)—'दु' गतौ भ्वा० प० वे० दवति, 'टुदु' उपतापे स्वा० प० अनि० दुनोति, आभ्याम् 'दुतनिभ्यां' उ० ३।९० इति क्तः धातोः दीर्घश्च। दवति गच्छति, दुनोति उपतापयति शत्रून् वा दूतस्तम् २या १व०।

दृशे (१०)—'दृशिर्' प्रेक्षणे भ्वा० प० अनि० पश्यति, अस्मात् क्विप्। पश्यतीति दृश्यते ऽनया वा दृक् तस्मै ४र्थी १व०। यद्वा 'दृशे विख्ये च' ३।४।११ इति तुमर्थे निपातः। दृशे = द्रष्टुम्।

देवः (१०)—'दिवु' क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु दि० प० से० दीव्यति, अस्मात् 'हलश्च' ३।३।१२१ इति घञ् 'व्यत्ययो बहुलम्' ३।१।८५ इति व्यत्ययेन कर्तरि। दीव्यतीति देवः १मा १व०। यद्वा पचाद्यच्।

देवेभिः (२)—देव शब्दस्य ३या बहु० 'बहुलं छन्दसि' ७।१।१० इति पाक्षिको भिस ऐसभावः।

द्रविणस्युः (४)—'द्रु' गतौ भ्वा० प० वे० द्रवति, अस्मात् 'द्रुदक्षिभ्यामिनन्' उ० २।५० इति इनन्। द्रवति सर्वत्र गच्छतीति द्रविणं धनम्। 'दुरस्युर्द्रविणस्यु०' ७।४।३६ इति क्यचि निपातः। आत्मनो द्रविणमिच्छतीति द्रविणस्युः। 'व्यत्ययो बहुलम्' ३।१।८५ इत्यर्थव्यत्ययः। यजमानस्य धनमिच्छुरिति।

द्विषः (६)—'द्विष्' अप्रीतौ अ० उ० अनि०, द्वेष्टि, द्विष्टे, अस्मात् क्विप्। द्वेष्टि यः सः द्विट् तस्मात् ५मी १व०।

न (५)—'णह' बन्धने दि० उ० अनि० नह्यति, नह्यते, अस्मात् ड। अव्ययसंज्ञा।

नः (६)—अस्मच्छब्दस्य [ अस्मभ्यम् ] २या बहु० अस्मान् इत्यस्यस्थाने 'बहुवचनस्य वस्नसौ' ८।१।२१ इति नसादेशः।

नः (१०)—अस्मच्छब्दस्य [ अस्मभ्यम् ] ६ष्ठी बहु० अस्माकमित्यस्यस्थाने नसादेशः।

निरमन्थत (९)—'मन्थ' विलोडने भ्वा० प० से० मन्थति, निः पूर्वस्यास्य लङि प्रथम० १व० व्यत्ययेनात्मनेपदम्।

निषत्सि (१)—'षद्लृ०' विसरणगत्यवसादनेषु भ्वा० प० अनि० सीदति, अस्य लोटि मध्यम० १व० 'सेह्यपिच्च' ३।४।८७ 'वा छन्दसि' ३।४।८८ इत्युभयसंज्ञावत्त्वात् आर्धधातुककर्तृकः शबभावः। सत्सि। नि–सत्सि, षत्वं पूर्वमुक्तम्।

परमात् (८)—'पॄ' पालनपूरणयोः जु० प० अनि० पिपर्त्ति, अस्मात् 'ऋदोरप्' ३।३।५७ इत्यप् परः। 'माङ्' माने जु० आ० अनि० मिमीते, अस्मात् क्विप्। परा मा यस्य स परमस्तस्मात् ५मी १व०।

पाहि (६)—'पा' रक्षणे अ० प० अनि० पाति, अस्य लोटि मध्यम पु० १व० हिः।

पुष्करात् (९)—'पुष्' पुष्टौ भ्वा० प० से० पोषति, दि० प० अनि० पुष्यति, क्र्या० प० से० पुष्णाति, एभ्यः 'पुषः कित्' उ० ४।४ इति करन्। कित्त्वान्न गुणः। पुष्यतीति पुष्करं तस्मात् ५मी १व०।

प्रियम् (५)—'प्रीङ्' प्रीतौ दि० आ० अनि० प्रीयते, 'प्रीञ्' तर्पणे कान्तौ च क्र्या० उ० अनि० प्रीणाति, प्रीणीते, अस्मात् 'इगुपध'० ३।१।१३५ इति कः। प्रीणातीति प्रियस्तम् १या १व०।

प्रेष्ठम् (५)—प्रियशब्दात् 'अतिशायने तमबिष्ठनौ' ५।३।५५ इतीष्ठन्। 'प्रियस्थिर...प्र स्थ०' ६।४।१५७ इति प्रियशब्दस्य प्रादेशः। अतिशयेन प्रिय इति प्रेष्ठस्तम् २या १व०।

बर्हिषि (१)—'बृहि' वृद्धौ शब्दे च भ्वा० प० से० बृंहति, अस्मात् 'बृंहेर्नलोपश्च' उ० २।१०९ इति इसि प्रत्ययो नुमो नलोपश्च। बृंहति वर्द्धते ज्ञानं यत्र तद् बर्हिस्तेषु ७मी बहु०।

मनः (८)—'मन' ज्ञाने दि० आ० अनि० मन्यते, अस्मात् 'सर्वधातुभ्यो०' उ० ४।१८९ इत्यसुन्। मन्यते इति मनस्तम् २या १व०।

मह्े (१०)—'मह' पूजायाम् भ्वा० प० से० महति, चु० उ० से० महयति, ते, आभ्यां क्विप्। महति पूजयतीति मट् तस्मै ४र्थी १व०।

महोभिः (६)—मह धातोः 'सर्वधातुभ्यो०' उ० ४।१८९ इत्यसुन् महति महयति पूजयतीति महस्तैः ३या० बहु०।

मर्त्यस्य (६)—'मृङ्' प्राणत्यागे तु० प० लुङ् लिङ् शिस्तु आ० वे०, अस्मात् 'अघ्न्यादयश्च' उ० ४।११२ इति यकि निपातः। ६ष्ठी १व०।

मानुषे (२)—'मनु' अवबोधने त० आ० अनि० मनुते, अस्मात् 'भृमृशि०' उ० १।१० इति उः। मनुतेऽवबुध्यते इति मनुः। 'मनोर्जातौ०' ४।१।१६१ इति अञ् षुक् च। मनोर्जात्यापत्यं मानुषस्तस्मिन् ७मी १व०।

मितम् (५)—'ञिमिदा' स्नेहने भ्वा० आ० से० मेदते, दि० प० से० मेद्यति, 'डुमिञ्' प्रक्षेपणे स्वा० उ० अनि० मिनोति, मिनुते, एभ्यः 'असि चिमि०' उ० ४।१६४ इति क्तः। यद्वा मितात् त्रायते। 'त्रैङ्' पालने भ्वा० आ० अनि० त्रायते, 'सुपि स्थः' ३।२।४ सुपीति योगो विभज्यते, सुपि उपपदे आदन्तात्कः स्यात्।

मूर्द्ध: (८)—'मुर्वी' बन्धने भ्वा० प० से० मूर्वति, अस्य 'श्वन्नुक्षन्' उ० १।१५९ इति कनिन्नन्तो निपातः। मूर्वति बध्नाति स मूर्द्धा। वस्य धः। तस्मात् ५मी १व०। मुह्यतेर्वा।

यज्ञस्य (३)—'यज' देवपूजासङ्गतिकरणदानेषु भ्वा० उ० अनि० यजति, ते, अस्मात् 'यजयाच०' ३।३।९० इति नङ्। यजनं यज्ञस्तस्य ६ष्ठी १व०।

यज्ञानाम् (२)—यज्ञशब्दस्य ६ष्ठी बहु०।

रथम् (५)—'रमु' क्रीड़ायाम् भ्वा० आ० अनि० रमते, अस्मात् 'हनि कुषि०' उ० २।२ इति कथन्। रमते यस्मिन् येन वा रथस्तम् २या १व०।

वः (५)—युष्मच्छब्दस्य [ते] व्यत्ययेन त्वामित्यस्य स्थाने 'बहुवचनस्य वस्नसौ' ८।१।२१ इति वसादेशः।

वत्सः (८)—'वस' निवासे भ्वा० प० अनि० वसति, आच्छादने अ० आ० से० वस्ते, 'वद' व्यक्तायां वाचि भ्वा० प० से० वदति, एतेभ्यः 'वृतॄवदि०' उ० ३।६२ इति सः। वसेः सस्य तः। वसति, वस्ते, वदति स वत्सः १मा १व०।

वर्द्धसि (७)—'वृधु' वृद्धौ भ्वा० आ० से० वर्द्धते, 'व्यत्ययो बहुलम्' ३।१।८५ इति व्यत्ययेन परस्मैपदम्।

विपन्यया (४)—'पन' व्यवहारे स्तुतौ च भ्वा० प० से० पनति, विपूर्वादस्मात् 'ऋहलोर्ण्यत्' ३।१।१२४ 'मितां ह्रस्वः' ६।४।९२। टाप्। विपन्या व्यवहारः स्तुतिर्वा तया ३या १व०।

विवस्वत् (१०)—'वस' धातोः [वत्सः] विपूर्वात् क्विप्। 'तदस्यास्त्यस्मिन्०' ५।२।९४ इति मतुप्। २या १व०।

विश्ववेदसम् (३)—'विष्लृ' व्याप्तौ जु० उ० अनि० वेवेष्टि, वेविष्टे, 'विश' प्रवेशने तु० प० अनि० विशति, आभ्यां 'अशू प्रुषि०' उ० १।१५१ इति क्वन्। वेवेष्टि सर्वं विशति सर्वत्रेति विश्वः (म्)। 'विद' ज्ञाने अ० प० अनि० वेत्ति, 'विद' सत्तायाम् दि० आ० अनि० विद्यते, 'विदॢ' लाभे तु० उ० अनि० विन्दति, ते, एभ्यः 'विदि भुजिभ्यां०' उ० ४।२३८ इति विश्वोपपदेऽसिः। 'गतिकारकोपपदयोः पूर्वपद-प्रकृतिस्वरत्वञ्च' उ० ४।२२७। विश्वं सर्वं वेत्ति, विन्दति, विश्वस्मिन् विद्यते वा विश्ववेदास्तम् २या १व०। विश्वं सर्वं वेदो धनं यस्येति बहुव्रीहिर्वा।

विश्वस्य (९)—विश्वशब्दस्य ६ष्ठी १व० पुंसि।

विश्वस्याः (६)—विश्वशब्दस्य ६ष्ठी १व० स्त्रियाम्।

विश्वेषाम् (२)—विश्वशब्दस्य ६ष्ठी बहु० पुंसि।

वीतये (१)—'वी' गतिव्याप्तिप्रजननकान्त्यसनखादनेषु अ० प० अनि० वेति, अस्मात् 'मन्त्रे वृषेषपचमनविदभूवीरा०' ३।३।९६ इति क्तिन्। वीतिस्तस्मै ४र्थी १व०।

वृणीमहे (३)—'वृङ्' संभक्तौ क्र्या० आ० से० वृणीते, अस्य लटि उत्तम० बहु०।

वृत्राणि (४)—'वृतु' वर्त्तने भ्वा० आ० से० वर्त्तते, वरणे दि० आ० अनि० वृत्यते; आभ्यां

'स्फायितञ्चि०' उ० २।१३ इति रक्। वर्त्तते सर्वत्र वृत्यते वा वृत्र: (म्) तानि २या बहु०।

वेद्यम् (५)—विदलृधातो: विद ज्ञाने इत्यतो वा [ विश्ववेदसम् ] 'ऋहलोर्ण्यत्' ३।१।१२४ इति ण्यत्। वेत्तुं ज्ञातुं वा योग्यं वेद्यम् २या १व०।

शुक्र: (४)—'ईशुचिर्' पूतीभावे दि० उ० से० शुच्यति, ते, अस्मात् 'ऋज्रेन्द्र०' उ० २।२८ इति रन् निपात्यते शुचेश्चस्य क:। शुच्यति पूतीभवतीति शुक्र: १मा १व०।

सु ब्रवाणि (७)—सु पूर्वात् 'ब्रूञ्' व्यक्तायां वाचि अ० उ० अनि० ब्रवीति, ब्रूते, अस्य लोटि उत्तम० १व०। 'सुञ:' ८।३।१०७ पूर्वपदस्थात् निमित्तात्परस्य सुञ: निपातस्य सस्य ष:।

सधस्थात् (८)—सह तिष्ठन्ति यत्र देवा: स सहस्थस्तस्मात् सहस्थात् इत्यस्य 'सधमादस्थयोश्छन्दसि' ६।३।९६ इति सहस्य सधादेश: स्यात्।

समिद्ध: (४)—सम्पूर्वात् 'ञिइन्धी' दीप्तौ रु० आ० से० इन्धे इति धातो: 'ञीत: क्त:' ३।२।१८७ इति वर्त्तमाने क्त: १मा १व०।

सुक्रतुम् (३)—'डु कृञ्' करणे त० उ० अनि० करोति, कुरुते, अस्मात् 'कृञ: कतु:' उ० १।७६ इति कतु:। क्रियते इति क्रतु: कर्म। सु क्रतु: = सुक्रतुस्तम् २या १व०। शोभन: क्रतुर्यस्येति बहुव्रीहिर्वा।

स्तुषे (५)—'ष्टुञ्' स्तुतौ अ० उ० अनि० स्तौति, स्तुते, अस्य लेटि उत्तमैकवचने 'सिब्बहुलं लेटि' ३।१।३४ इति सिप्। यद्वा तिङां तिङो भवन्तीत्युत्तमैकवचनस्य व्यत्ययेन मध्यमैकवचनादेश:।

हव्यदातये (१)—जुहोते: [ आहुत: ] 'अचो यत्' ३।१।९७ इति हव्यम्। 'डुदाञ्' दाने जु० उ० अनि० ददाति, दत्ते, 'दाण्' दाने भ्वा० प० अनि० यच्छति, एताभ्यां 'स्त्रियां क्तिन्' ३।३।९४ इति क्तिनि 'छन्दस्युभयथा' ३।४।११७ इति पक्षे सार्वधातुकत्वात् 'घुमास्था०' ६।४।६६ इत्यार्धधातुकनिमित्तो न ईकार: दाति:। हव्यस्य दातिर्हव्यदातिस्तस्यै ४र्थी १व०।

हि (१०)—'ओहाक्' त्यागे जु० प० अनि० जहाति, अस्मात् क्विप्। 'घुमास्था०' ६।४।६६ इतीकार:। व्यत्ययादनभ्यासस्यापि 'ह्रस्व:' ७।४।५९ इति ह्रस्व:। अव्ययसंज्ञा।

हित: (२)—दधाते: [अधि] 'निष्ठा' ३।२।१०२ इति क्त:। 'दधातेर्हि:' इति धातोर्ह्या आदेश:। १मा १व०।

होता (१,२) जुहोते: [आहुत:] 'ण्वुल्तृचौ' १।१।१३३ इति 'बहुलं छन्दसि' ६।१।३४ इति सम्प्रसारणं यद्वा 'नप्तृनेष्टृत्वष्टृहोतृ०' उ० २।९५ इति साधु:। १मा १व०।

होतारम् (३)—होतृ शब्दस्य २या १व०।

इति प्रथमदशति: प्रथमखण्डश्च।

प्रथमम् ( आग्नेयं ) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। द्वितीयः खण्डः। द्वितीया दशतिः।

## अथ प्रथमा।

नमस्ते अग्न इत्यृच आङ्गिरसो विरूप ऋषिः। संवर्गं साम, अग्निर्वार्षिः ( अग्नेः संवर्गः। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु अग्निस्तुतौ प्रार्थनायां च।

१ २ ३ १ २ ३ १ २ ३ १ २

**ॐ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः।**

१ २ ३ १ ३

**अमै रमित्र मर्दय॥ ११॥ (क)**

**पदपाठः।** नमः १। ते ४। अग्ने सं०। ओजसे ४। गृणन्ति क्रि०। देव सं०। कृष्टयः १। अमैः ३। अमित्रम् २। अर्दय क्रि०।

**अन्वयः।** [ हे ] देव! अग्ने! ते नमः [ अस्तु ]। कृष्टयः ओजसे [ त्वां ] गृणन्ति। [ त्वं च ] अमैः अमित्रम् अर्दय।

**आधियाज्ञिकम्।** हे 'देव' प्रकाशमय! अग्ने! 'ते' तुभ्यं 'नमः' नमस्कारोऽन्नं वास्तु। 'कृष्टयः' मनुष्या उपासका इति 'ओजसे' आत्मबल-प्राप्तये त्वां 'गृणन्ति' स्तुवन्ति। त्वं च 'अमैः' बलैः स्वकीय-प्रभावैः, रोगादिभयैर्वा 'अमित्रं' बहिःशत्रून् 'अर्दय' नाशय।

**आध्यात्मिकम्।** हे 'देव' प्रकाशमय 'अग्ने' परमात्मन्! 'ते' तुभ्यं 'नमः' अस्तु। 'कृष्टयः' मनुष्या उपासका इति 'ओजसे' आत्मबल-प्राप्तये [ य आत्मदा बलदा यस्य विश्व उपासते। यजुः,

---

(क) ऋग्वेदे, अष्ट० ६। अध्या० ५। व० २५।

२५।३३ ] त्वां 'गृणन्ति' स्तुवन्ति। त्वं च 'अमैः' बलैः स्वकीयप्रभावैः रोगादिभयैर्वा 'अमित्रं' वहिरन्तश्शत्रून् 'अर्द्दय' नाशय।

**निरुक्तम्।** नम इति अन्ननामसु ॥ ३।९।४ ॥ ओज इति बलनामसु ॥ ३।९।७ ॥ कृष्टयो मनुष्यनाम ॥ ३।७।१ ॥ अमं भयं बलं वा ॥ १०।२१।१ ॥ अर्दयति वधकर्मसु ॥ ३।१०।४ ॥

## अथ द्वितीया।

दूतं वो विश्ववेदसमित्यृचो गोतमवंश्यो वामदेव ऋषिः। वैश्वमनसं साम, विश्वमना ऋषिः ( वैश्वमनसं च। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु अग्निं दूत ( ३मं० ) मितिवत्।

३१ २ ३१ २ ३ २ ३१ २
**दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्।**
१ २ ३ २
**यजिष्ठमृञ्जसे गिरा ॥ १२ ॥ (क)**

**पदपाठः।** दूतम् २। वः २। विश्ववेदसम् २। हव्यवाहम् २। अमर्त्यम् २। यजिष्ठम् २। ऋञ्जसे क्रि०। गिरा ३।

**अन्वयः।** दूतं विश्ववेदसं हव्यवाहम् अमर्त्यं यजिष्ठं वः (=त्वाम्) [अग्निं] गिरा ऋञ्जसे (=ऋञ्जे) [ अहम् ऋत्विगिति ]।

**आधियाज्ञिकम्।** 'दूतं' देवानां दौत्ये विनियुक्तं 'विश्ववेदसं' सर्वधनं 'हव्यवाहं' देवेभ्यो हविषां वोढारम् 'अमर्त्यम्' अमरणधर्माणं 'यजिष्ठम्' अतिशयेन यष्टारं 'वः' त्वां, वचनव्यत्ययः अग्निमिति 'गिरा' स्तुतिरूपया वाचा 'ऋञ्जसे' प्रसाधयामि, पुरुष० व्यत्ययः, वर्द्धयामि अहमृत्विगिति।

**आध्यात्मिकम्।** 'दूतं' सर्वदुःखनाशकं 'विश्ववेदसं' सर्वधनं, सर्वज्ञं वा 'हव्यवाहं' हव्यस्य दातव्यस्य शुभकर्मफलस्य प्रापकम्

(क) ऋग्वेदे, अष्ट० ३। अध्या० ५। व० ८।

'अमर्त्यम्' अविनाशिनं 'यजिष्ठम्' अतिशयेन सङ्गमनीयं प्राप्तव्यं 'वः' त्वां परमात्मानमिति 'गिरा' स्तुतिरूपया वाचा 'ऋञ्जसे' परिचरामि अहमुपासक इति।

**निरुक्तम्।** ऋञ्जतिः प्रसाधनकर्मा ॥ ६।२१।२ ॥

## अथ तृतीया।

उप त्वा जामय इत्यृचो भार्गवः प्रयोगो बार्हस्पत्योऽग्निर्वा ऋषिः। आभं औष्टीयं च साम, आभः शुष्टश्चर्षिः ( आभाश्रौष्टीये द्वे। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु विश्वजिति बहिष्पवमानस्य नवस्तोत्रे ( उपत्वा जामयो गिर इत्युपवती प्रतिपद्भवति स्तोमस्य रूपम्। ता० म० ब्रा० १६।५।११ )

१ २   ३ २ ३ २ ३   ३ १ २

**उपत्वा जामयो गिरो देदिशती र्हविष्कृतः।**

३ १२ २२

**वायोरनीके अस्थिरन् ॥ १३ ॥ (क)**

**पदपाठः।** उप अ०। त्वा २। जामयः १। गिरः १। देदिशतीः १। हविष्कृतः ४। वायोः ६। अनीके ७। अस्थिरन् क्रि०।

**अन्वयः।** हविष्कृतः जामयः [ इव ] देदिशतीः गिरः वायोः अनीके त्वा [ परमात्मानम् ] उपास्थिरन्।

**आधियाज्ञिकम्।** 'हविष्कृतः' उपासकार्थम्, उपासकानां हितार्थं वा 'जामयः' बन्धुभूताः इव, यथा बन्धवोऽनुकूलाचरणैर्बन्धूनां सुखानि सम्पादयन्ति तथा 'देदिशतीः' पुनः पुनरुपदिशन्त्यः [ दिशिरुच्चारणक्रियः। महाभाष्ये, १।१।१ ] 'गिरः' वेदवाचः 'वायोः' 'अनीके' सुष्ठूच्चार्यमाणत्वाद्वायुमण्डले 'त्वा' त्वां परमात्मानम् 'उपास्थिरन्' उपतिष्ठन्ते। याभिर्वेदवाग्भिर्यज्ञादिकं निष्पाद्यते तास्तत्सम्पाद्यानन्ते वायुमण्डले (अनन्ताकाशे) परमात्मानं गच्छन्ति।

---

(क) ऋग्वेदे, अष्ट० ६। अध्या० ७। व० ११ ॥

ता० म० ब्रा० अस्य मन्त्रस्य प्रयोजनं विशेषेण दर्शितम्, 'प्राणैर्वा एष व्यृध्यत इत्याहुर्यः सर्वं ददाति सर्वान् स्तोमान् सर्वाणि पृष्ठान्युपैतीति यद् वायव्या भवति प्राणानाᳬ समृद्ध्यै ॥ १६।५।२ ॥

**निरुक्तम्** । '''जामि जेमते र्वास्याद् गतिकर्मणः ॥ ३।६।१॥

## अथ चतुर्थी ।

उपत्वाग्ने इत्यृचो वैश्वामित्रो मधुच्छन्दा ऋषिः । वैश्वामित्रं साम, विश्वामित्रस्वर्षिः ( वैश्वामित्रं च । आ० ब्रा० ) गायत्री । अग्निः । विनियोगस्तु प्रातःसायंसवने ।

१ २ ३ १ २ ३ २ ३ २ ३ २

**उपत्वाग्ने दिवे दिवे दोषा वस्तर्धियावयम् ।**

२ ३ १ २ ३ १ २

**नमो भरन्त एमसि ॥ १४ ॥ (क)**

**पदपाठः** । उप अ० । त्वा २ । अग्ने सं० । दिवे, दिवे अ० । दोषावस्तः अ० । धिया ३ । वयम् १ । नमः २ । भरन्तः १ । एमसि क्रि० ।

**अन्वयः** । [हे] अग्ने ! वयं दिवे दिवे दोषावस्तः धिया नमः भरन्तः त्वा उपएमसि ।

**आधियाज्ञिकम्** । हे 'अग्ने' ! 'वयम्' ऋत्विज इति 'दिवेदिवे' विज्ञानस्य प्रकाशाय, प्रतिदिनं वा 'दोषावस्तः' रात्रावह्नि 'धिया' धारणवत्या बुद्ध्या 'नमः' हवीरूपमन्नं 'भरन्तः' स्रुवादिषु धारयन्तः 'त्वा' त्वाम् 'उपएमसि' प्राप्नुमः ।

**आध्यात्मिकम्** । हे 'अग्ने' परमात्मन् ! 'वयम्' उपासका इति 'दिवे दिवे' विज्ञानस्य प्रकाशाय 'दोषावस्तः' रात्रावह्नि 'धिया' धारणवत्या बुद्ध्या 'नमः' नमस्कारं 'भरन्तः' कुर्वन्तः 'त्वा' त्वाम् 'उप एमसि' उपगच्छामः प्राप्नुमः उपास्महीति ।

---

(क) ऋग्वेदे, अष्ट० १। अध्या० १। व० २।

**निरुक्तम्** । दिवेदिवे इत्यहर्नाम ॥ २।२०।२ ॥ दोषा रात्रिनामसु ॥ २।१८।१ ॥ वस्तोः अहर्नामसु ॥ २।२०।२ ॥ धीरिति प्रज्ञानाम ॥ ३।१३।१७ ॥

## अथ पञ्चमी ।

जराबोध इत्यृचोऽजीगर्त्तवंश्यः शुनःशेप ऋषिः । जराबोधीयं साम, अग्निरृषिः ( अग्नेर्जराबोधीये । आ० ब्रा० ) गायत्री । अग्निः । विनियोगस्तु ( जराबोधीयं भवत्यन्नाद्यस्यावरुध्यै । ता० म० ब्रा० १४।५।२७ ) इत्यन्नादिरक्षणाय लाभाय वाग्निस्तुतौ ।

१ २ ३ १ २ ३ २ २ ३ १ २
**जराबोध तद्विविड्ढि विशे विशे यज्ञियाय ।**

१ १ ३ १ २ ३ २
**स्तोमꣳ रुद्राय दृशीकम् ॥ १५ ॥ (क)**

**पदपाठः** । जराबोध सं०१ तत् २ । विविड्ढि क्रि० । विशेविशे ४ । यज्ञियाय ४ । स्तोमम् २ । रुद्राय ४ । दृशीकम् २ ।

**अन्वयः** । [हे] जराबोध [अग्ने] विशे विशे तत् विविड्ढि । यज्ञियाय रुद्राय [तुभ्यं] दृशीकं स्तोमं [कुर्म्म इति] ।

**आधियाज्ञिकम्** । हे 'जराबोध' जरया स्तुत्या बोध्यमान अग्ने ! 'विशेविशे' सर्वप्रजाहितार्थं 'तत्' देवयजनं 'विविड्ढि' प्रविश । 'यज्ञियाय' यज्ञार्हाय पूजनीयाय 'रुद्राय' दुष्टानां रोदयित्रे [यो वै रुद्रः सोऽग्निः । श० ब्रा०, ५।२।३।१३] तुभ्यं 'दृशीकं' दर्शनीयं 'स्तोमं' स्तुतिसमूहं कुर्म इति ।

**आध्यात्मिकम्** । हे 'जराबोध' जरया स्तुत्या बोध्यमान अग्ने परमात्मन् ! 'विशेविशे' सर्वप्रजाहितार्थं 'तत्' मनः 'विविड्ढि' प्रविश [मनो वै देववाहनम् । श० ब्रा०, १।१।५।२ ॥ मनसा वा इदꣳ सर्वमाप्तम् । श० ब्रा०, १।६।२।२२] 'यज्ञियाय' यज्ञार्हाय पूज-

(क) ऋग्वेदे, अष्ट० १ । अध्या० २ । व० २३ ॥

नीयाय 'रुद्राय' दुष्टानां रोदयित्रे, रुतं वेदात्मकं शब्दं कल्पादौ राति ददातीति तस्मै ज्ञानप्रदाय वा तुभ्यं 'दृशीकं' दर्शनीयं 'स्तोमं' स्तुति-समूहं कुर्म्म इति।

**निरुक्तम्।** एवं व्याख्यातम्, 'जरा स्तुतिर्जरतेः स्तुति-कर्मणः, तां बोध नया बोधयितरिति वा, तद् विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम्॥ १०।८।१॥

रुद्रो रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा, 'यद-रुदत्तद्रुद्रस्य रुद्रत्वम्' इति काठकम् 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति हारिद्रविकम्॥ १०।५।२॥

## अथ षष्ठी।

प्रति त्यं चारुमित्यृचः काण्वो मेधातिथिर्ऋषिः। मारुतं साम, अग्निश्चर्षिः (मारुतं च। आ० ब्रा०) गायत्री। अग्निः। विनि-योगस्तु उक्थस्तुतौ (मारुतं भवति। ता० म० ब्रा० १४।१२।८)

२ ३ १ २र ३ १ २ ३ २ ३ १ २
**प्रति त्यं चारु मध्वरं गोपीथाय प्रहूयसे**
३ १ २ ३ १ २
**मरुद्भि रग्न आगहि॥ १६॥ (क)**

**पदपाठः।** प्रति अ०। त्यम् २। चारुम् २। अध्वरम् २। गोपीथाय ४। प्रहूयसे क्रि०। मरुद्भिः ३। अग्ने सं०। आगहि क्रि०।

**अन्वयः।** [हे] अग्ने! त्यं चारुम् अध्वरं प्रति गोपीथाय [त्वं] प्रहूयसे। [अतः] मरुद्भिः [सह] आगहि।

**आधियाज्ञिकम्।** हे 'अग्ने'! 'त्यं' तं 'चारु' विधि-वदनुष्ठीयमानम् 'अध्वरं' हिंसारहितं यज्ञम् [अध्वरो वै यज्ञः। श० ब्रा० १।२।३।२८] 'प्रति' 'गोपीथाय' सोमपानाय त्वं 'प्रहूयसे' प्रकर्षेण आहूयसे। अतः 'मरुद्भिः' मरुद्गणैः सह 'आगहि आगच्छ। वायुसखोऽग्निः प्रसिद्धमिति।

---

(क) ऋग्वेदे, अष्ट० १। अध्या० १। व० ३६।

**आध्यात्मिकम्।** हे 'अग्ने' अच्यते प्राप्यते सत्क्रियते वा वेदादिभिः शास्त्रैर्विद्वद्भिश्चेत्यग्निः परमेश्वरस्तत्संबुद्धौ 'त्वं' तं 'चारु' विधिवदनुष्ठीयमानम् 'अध्वरं' हिंसारहितं यज्ञं 'प्रति' 'गोपीथाय' ध्यानाभ्यासरसप्राप्तये त्वं 'प्रहूयसे' प्रकर्षेणाहूयसे ध्यायसे इति। अतः 'मरुद्भिः' मितराविभिः सूक्तवाग्भिः सह 'आगहि' आगच्छ, साक्षाद्भव।

**निरुक्तम्।** चारु चरतेः॥ ८।१५।१॥ चारु रुचेर्विपरीतस्य॥ ११।५।४॥ अध्वर इति यज्ञ नाम। ध्वरतिः हिंसाकर्मा तत्प्रतिषेधः॥ १।८।१॥ एवं व्याख्यातम्, 'तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छेति॥ १०।३६।१॥ मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा॥ ११।१३।२॥

## अथ सप्तमी।

अश्वं न त्वा वारवन्तमित्यृचोऽजीगर्त्तवंश्यः शुनःशेप ऋषिः। त्रीणि सामानि। प्रथम तृतीययोः भार्गवं नाम भृगुश्चर्षिः। द्वितीयं वारवन्तीयमिन्द्रश्चर्षिः (भार्गवे द्वे। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु अग्निष्टोमयागे (वारवन्तीयमग्निष्टोमसामकार्यम्। ता० म० ब्रा० ५।३।८)

२ ३ २ ३ १ २ ३ १ २ ३ १ २र
**अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।**
३ १ २ ३ १ २
**सम्राजन्तमध्वराणाम्॥ १७॥ (क)**

**पदपाठः।** अश्वम् २। न अ०। त्वा २। वारवन्तम् २। वन्दध्यै अ०। अग्निम् २। नमोभिः ३। सम्राजम् २। तम् २। अध्वराणाम् ६।

**अन्वयः।** अध्वराणां सम्राजं, वारवन्तम् अश्वं न, तं त्वा अग्निं नमोभिः वन्दध्यै [प्रवृत्ताः]।

---

(क) ऋग्वेदे, पृष्ठ० १। अध्या० २। व० २२॥

**आधियाज्ञिकम्।** 'अध्वराणां' हिंसारहितानां यज्ञानां 'सम्राजं' सम्यक् प्रकाशकं 'वारवन्तं' बालवन्तम् 'अश्व'' 'न' इव, यथाश्वः पुच्छादिबालैर्दंशमशकादीन् परिहरति तथाग्निर्ज्वालयाऽस्मद्विरोधिनः परिहरति, अतोऽश्ववत्, 'तं' 'त्वा' त्वाम् 'अग्निं' 'नमोभिः' अन्नैः स्तुतिभिर्वा 'वन्दध्यै' वन्दितुं प्रवृत्ता वयमृत्विज इति।

**आध्यात्मिकम्।** 'अध्वराणां' हिंसारहितानां यज्ञानां 'सम्राजं' सम्यक् प्रकाशकं 'वारवन्त'' बालवन्तम् 'अश्वं' 'न' इव, परमेश्वरो वाधकान् कामक्रोधादीन् स्वसामर्थ्यैः परिहरति अतोऽश्ववत्, 'तं' प्रसिद्धं 'त्वा' त्वाम् 'अग्निं' परमात्मानं 'नमोभिः' नमस्कारैः स्तुतिभिश्च 'वन्दध्यै' वन्दितुं प्रवृत्ता वयमुपासका इति।

**निरुक्तम्।** 'अश्वं न त्वा वारवन्तम्' अश्वमिव त्वां बालवन्तम्। बाला दंशवारणार्था भवन्ति ॥ १।२०।४ ॥

## अथाष्टमी।

और्वभृगुवच्छुचिमित्यृचः काण्वो मेधातिथिर्ऋषिः। सामुद्रं साम, और्ववंश्यो वैधारय ऋषिः ( और्वस्य। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु अग्न्याह्वाने।

३ १ २र ३ १ २र
**और्वभृगुवच्छुचि मप्नवानवदाहुवे।**

३ १ २ ३ १ २
**अग्निꣳ समुद्रवाससम् ॥ १८ ॥ (क)**

**पदपाठः।** और्वभृगुवत् अ०। शुचिम् २। अप्नवानवत् अ०। आहुवे क्रि०। अग्निम् २। समुद्रवाससम् २।

**अन्वयः।** और्वभृगुवत् अप्नवानवत् शुचिं समुद्रवाससम् अग्निम् आहुवे।

---

(क) ऋग्वेदे, अष्ट० ६। अध्या० ७। व० ९॥

**आधियाज्ञिकम्।** 'ओर्वभृगुवत्' यथाऽऽहिताग्नयो यज्ञविद्यावेत्तारः ज्ञानकाण्डिनः 'अप्नवानवत्' यथा श्रौतकर्मकाण्डिनस्तथा 'शुचिं' शुद्धं 'समुद्रवाससम्' आकाशे व्याप्तम् 'अग्निम्' 'आहुवे' आहितं करोमि। अनेन परमात्मोपदिशति हे मनुष्याः! 'यथाऽऽहिताग्नयो यज्ञविद्यावेत्तारः ज्ञानकाण्डिनः श्रौतकर्मकाण्डिनश्च यथार्थतया यज्ञं कर्त्तुं शक्नुवन्ति तथा यूयमप्यनुतिष्ठत॥ यद्वा 'समुद्रवाससं' वेदवाचि स्थितं [वाग्वै समुद्रः। ता० म० ब्रा० ६।४।७॥ अग्निर्वाग्भूत्वा मुखं प्राविशत्। ऐतरेयोपनिषदि, खं० २] अनेन वाक्स्फूर्त्तिः प्रतिपद्यते।

**आध्यात्मिकम्।** 'ओर्वभृगुवत्' यथा ज्ञानकाण्डिनः 'अप्नवानवत्' यथा श्रौतकर्मकाण्डिनः तथा 'शुचिं' शुद्धस्वरूपं 'समुद्रवाससं' वेदवाचि स्थितं [ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः। ऋग्वेदे, अष्ट० २। अध्या० ३। व० २१] 'अग्निं' परमात्मानम् 'आहुवे' आह्वयामि।

**निरुक्तम्।** [ और्वो वै जमदग्निः ]। जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो भवति॥ ७।२४।८॥ शुचिः शोचतेर्ज्वलति कर्मणः॥ ६।१।१॥ समुद्र इत्यन्तरिक्षनाम॥ २।१०।३॥

## अथ नवमी।

अग्निमिन्धानो मनसेत्यृचो मेधातिथिर्ऋषिः। असङ्गं साम, अत्रिश्चर्षिः (अत्रेश्च। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु प्रातः सवनेऽग्निदीपने।

३ १ २ ३ १ २र ३ १२ ३ १ २

**अग्निमिन्धानो मनसा धियꣳ सचेत मर्त्यः।**

३ १ २ ३ १ २

**अग्निमिन्धे विवस्वभिः॥ १९॥ (क)**

(क) ऋ० ८।७।१२॥

**पदपाठः।** अग्निम् २। इन्धानः १। मनसा ३। धियम् २। सचेत क्रि०। मर्त्यः १। अग्निम् २। इन्धे क्रि०। विवस्वभिः ३।

**अन्वयः।** मर्त्यः अग्निम् इन्धानः मनसा धियं सचेत। विवस्वभिः अग्निम् इन्धे।

**आधियाज्ञिकम्।** 'मर्त्यः' मनुष्यः 'अग्निम्' 'इन्धानः' काष्ठैः प्रज्वलयन् 'मनसा' एव श्रद्दधानः 'धियं' कर्म यज्ञादिकं 'सचेत' कुर्वीत। 'विवस्वभिः' ऋत्विभिः 'अग्निम्' 'इन्धे' प्रज्वलयेत्।

**आध्यात्मिकम्।** 'मर्त्यः' मनुष्यः 'अग्निं' परमात्मानम् 'इन्धानः' ध्यानादिना मनसि प्रकाशयन् 'मनसा' मननेन 'धियं' प्रज्ञां 'सचेत' सम्यक् प्राप्नुयात्। 'विवस्वभिः' प्रकाशहेतुभिर्ध्यान-धारणासमाधिभिः 'अग्निं' प्रकाशस्वरूपं परमात्मानम् 'इन्धे' उपासीत।

## अथ दशमी।

आदित्प्रत्नस्य रेतस इत्यृचः काण्वो वत्स ऋषिः। निधनकामं साम, प्रजापतिश्चर्षिः (प्रजापतेश्च निधनकामम्। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु (निधनवता स्तुवन्ति वीर्य्यं वै गायत्री वीर्य्यं निधनं वीर्य्यंणैव तद्वीर्य्य ँ समर्द्धयति। ता० म० ब्रा० ७।३।१३) इति वीर्य्यप्राप्तयेऽग्निस्तुतौ।

१उ ३ २ ३ १०२३ १ २ ३ २
**आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्।**
३ २उ ३ १ २ ३ २
**परो यदिध्यते दिवि॥ २०॥ (क)**

---

(क) ऋग्वेदे, अष्ट० ५। अध्या० ८। व० १४॥ 'दिवि' इत्यत्र 'दिवा' इति पाठान्तरम्।

**पदपाठः** । आत् अ० । इत् अ० । प्रत्नस्य ६ । रेतसः ६ । ज्योतिः १ । पश्यन्ति क्रि० । वासरम् २ । परः १ । यत् १ । इध्यते क्रि० । दिवि ७ ।

**अन्वयः** । परः दिवि यत् ज्योतिः इध्यते, आत् इत् (=तदेव) प्रत्नस्य रेतसः वासरं [ज्योतिः] [जनाः] पश्यन्ति ।

**आधियाज्ञिकम्** । 'परः दिवि' द्युलोकादपि परस्तात् 'यत्' 'ज्योतिः' 'इध्यते' दीप्यते, भाति 'आत् इत्' तदेव 'प्रत्नस्य' सनातनस्य 'रेतसः' ज्योतिषां वीजभूतस्य परमात्मनः 'वासरं' नियामकं, यज्ञाग्निरूपं, रूपान्तरीभूतं सूर्य्यरूपेण राजमानं च 'पश्यन्ति' ऋत्विग्यजमानादयो यज्ञवेद्यां पश्यन्ति । अयं भावः—परमात्मनः सूक्ष्मं यज्ज्योति रस्ति तस्यैवांशीभूतमिदं ज्योति र्यज्ञे वह्निरूपेण दिवि सूर्यरूपेण च सर्वे प्रत्यक्षं कुर्वन्ति । याज्ञिकोऽग्निर्नसाधारणः । सूर्यश्च परमस्य ज्योतिष एवांशीभूतं प्रत्यक्षं ज्योतिरिति दिक् [आदित्यो वा एष एतन्मण्डलं तपति...य एषोऽन्तरादित्ये हिरण्मयः पुरुषः । तैत्तिरीयारण्यके, १०।१३]

**आध्यात्मिकम्** । 'परः दिवि' द्युलोकादपि परस्तात् 'यत्' 'ज्योतिः' 'इध्यते' दीप्यते, भाति 'आत् इत्' तदेव 'प्रत्नस्य' सनातनस्य 'रेतसः' ज्योतिषां बीजभूतस्य परमात्मनः 'वासरं' नियामकं ज्योतिः 'पश्यन्ति' विद्वांसो ज्ञानदृष्ट्या पश्यन्ति । अयं भावः—सूर्यो द्युस्थानः । नि० ७।५।२ । द्युलोके सूर्य्यस्य ज्योतिः प्रकाशते इति प्रसिद्धम् । द्युलोकात्परतो यत्र सूर्य्यादिज्योतिषां गतिर्नास्ति तत्रापि ज्योतिषां ज्योतिर्भूतस्याखण्डज्योतिषः परमात्मनो ज्योतीराजते [ न तत्र सूर्य्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति । कठोपनिषदि अ० २ वल्ली ५ ] तज्ज्योतिर्विद्वांसोऽध्यात्मदृष्ट्या पश्यन्ति ।

**निरुक्तम्** । प्रत्नमिति पुराणनाम ॥ ३।१९।२३ ॥ वासराणि वेसराणि विवासनानि गमनानीति वा ॥ ४।७।१ ॥

# अथ व्याकरणम् ।

अग्निम् (१७, १८, १९, १९)—[ १म दशतिः ] ।

अग्ने (११, १४, १६)—[ १म द० ] ।

अध्वरम् (१६)—'ध्वृ' हर्च्छने [ कौटिल्ये ] भ्वा० प० अनि० ध्वरति, अस्मात् पचाद्यच् । ध्वरः । ततः नञ् । नास्ति ध्वरः कौटिल्यं यस्मिन् सोऽध्वरस्तम् २या १व० ।

अध्वराणाम् (१७)—अध्वरशब्दस्य ६ष्ठी बहु० ।

अनीके (१३)—'अन' प्राणने अ० प० से० अनिति, अस्मात् 'अनिहृषीभ्यां किच्च' उ० ४।१७ इति ईकन् कित्वान्न वृद्धिः । अनिति जीवयतीत्यनीकं तस्मिन् ७मी १व० ।

अप्नवानवत् (१८)—'आप्लृ' व्याप्तौ स्वा० प० अनि० आप्नोति, अस्मात् 'आपः कर्माख्या०' उ० ४।२०८ इत्यसुन् ह्रस्वो नुट् च । अप्नः कर्म नि० ३।१।१ । 'वन' संभक्तौ भ्वा० आ० से० वनते अस्मात् घञ् वानः । अप्नसि कर्म्मणि वानः . संभक्तिर्यस्य सोऽप्नवानः । ततो वतिः । अव्ययम् ।

अमर्त्यम् (१२)—नञ् + मर्त्यः [ मर्त्यस्य १म द० ] तममर्त्यम् २या १व० ।

अमित्रम् (११)—नञ् + मित्रम् [ मित्रम् १म द० ] अमित्रः तम् २या १व० ।

अमैः (११)—'अम' रोगे चु० प० से० आमयति, अस्मात् पचाद्यच्, तैः ३या बहु० ।

अर्दय (११)—'अर्द' हिंसायाम् चु० प० से० अर्दयति, अस्य लोटि मध्यम० १व० ।

अश्नम् (१७)—'अशू' व्याप्तौ सङ्घाते च स्वा० आ० से० अश्नुते, 'अश' भोजने क्र्या० प० से० अश्नाति, आभ्याम् 'अशू प्रुषि०' उ० ११।५१ इति क्वन् । अश्नुते व्याप्नोति, अश्नाति भक्षयति वाश्नस्तम् २या १व० ।

आगहि (१६)—'गाङ्' गतौ अ० आ० अनि० गाते, आङ् पूर्वस्यास्य लोण्मध्यमैकवचने व्यत्ययेन परस्मैपदं ह्रस्वश्च ।

आत् (२०) अतधातोः [ अतिथिन् ] व्यत्ययेन खिः । अव्ययसंज्ञा ।

आहुवे (१८)—आङ्पूर्वस्य 'ह्वेञ्' स्पर्द्धायां शब्दे च भ्वा० उ० अनि० ह्वयति, ते, धातोः व्यत्ययेन सम्प्रसारणवत् लटि उत्तमैकवचने उवङादेशः ।

इत् (२०)—इण् धातोः [ इतराः १द ] क्विप्, तुक्, अव्ययसंज्ञा च ।

इध्यते (२०)—इन्धी धातोः [समिद्धः १द] कर्म्मणि वाच्ये । प्रथम पु० १व० ।

इन्धानः (१९)—इन्धीधातोः शानच् । १मा १व० ।

इन्धे (१८)—इन्धीधातोः लटि उत्तम पु० १व० ।

उप अस्थिरन् (१३)—उपेत्यव्ययं सामीप्ये । 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' वा० १।३।२५ इति उपपूर्वात्तिष्ठतेः 'ष्ठा' गतिनिवृत्तौ भ्वा०

प० अनि० तिष्ठति, आत्मनेपदम्। लुङि, प्रथम पु० बहु० 'मन्त्रेघस०' २।४।८० इति च्लेर्लुक्. 'स्थाघ्वो०' १।२।२७ इतीत्वं, व्यत्ययेन 'झस्यरन्' ३।४।१०५।

उप एमसि (१४)—उपपूर्वात् इण् धातोः [ इतराः १८ ] मसि 'इदन्तोमसि' ७।१।४६ इति मस इमागमः। इमसि। आ+इमसि=एमसि।

ऋञ्जसे (१२)—'ऋजि' भर्जने भ्वा० से० ऋञ्जते, अस्योत्तम पु० १व० व्यत्ययेन लटि मध्यम पु० १व०। धातूनामनेकार्थत्वात्साधुः।

ओजसे (११)—'उब्ज' आर्जवे तु० प० से० उब्जति, अस्मात् 'उब्जेर्बलेवलोपश्च' उ० ४।१९२ इत्यसुन् वलोपश्च। ४र्थी १व०।

और्वभृगुवत् (१८)—'ऊर्णुञ्' आच्छादने अ० उ० से० ऊर्णोति, ऊर्णौति, ऊर्णुते, अस्मात् 'महति ह्रस्वश्च' उ० १।३१ इति कुप्रत्ययो नु लोपो ह्रस्वश्च। उरुः। 'तस्येदम्' ४।३।१२० इत्यण्। और्वः। 'भ्रस्ज' पाके तु० उ० अनि० भृज्जति, ते, अस्मात् 'प्रथिम्रदिभ्रस्जां०' उ० १।२८ इति कुः। भृगुः। और्वो यो भृगुः स और्व भृगुः। 'तेन तुल्यं०' ५।१।११५ इति वतिः। अथवा उर्वी पृथिवी नि० २।५।२ तत्र भवा और्वाः पृथिवीस्थाः। भृगव इति पद नाम, तेन च ज्ञानादयोऽर्थाः—और्वा ये भृगवः=पृथिवीस्था ये ज्ञानकाङ्क्षिनस्तद्वत्। अव्ययपदम्।

कृष्टयः (११)—'कृष' विलेखने भ्वा० प० अनि० कर्षति, तु० उ० अनि० कृषति, ते, अस्मात् 'निष्ठा' ३।२।१०२ इति क्तः। कृष्टं कर्म तदस्यास्तीति कृष्टिः 'लुगकारेकाररेफाश्च वक्तव्याः' वा० ४।४।१२८ इत्यनेनेकारः। १मा बहु०।

गिरः (१३)—[ १८ ]।

गिरा (१२)—[ १८ ]।

गृणन्ति (११)—गृधातोः [ गृणानः १८ ] लटि प्रथम पु० बहु०।

गोपीथाय (१६)—'पातॄ०' उ० २।७ इति थक् 'पा' पाने भ्वा० प० अनि पिबति, पिबतीति पीयते वा पीथः। 'निशीथगोपीथा०' उ० २।९ इति निपात्यते। गोः पीथः पानं=गोपीथः। यद्वा 'पा' रक्षणे [ पाहि १८ ] इति धातोः, गां वाणीं पाति रक्षतीति गोपीथो वेदज्ञस्तस्मै ४र्थी १व०।

चारुम् (१८) 'चर' गतौ भ्वा० प० से० चरति, अस्मात् 'दृसनिजनिचरि०' उ० १।३ इति ञुण्। चरतीति चारुस्तम् २या १व०।

जराबोध (१५)—'जृष्' वयोहानौ भ्वा० प० से० जृषति, दि० प० से० जीर्यति, आभ्यां 'षिद्भिदा०' ३।३।१०४ इत्यङ् 'ऋदृशोऽङिगुणः' ७।४।१६। टाप्। बुध, अवबोधने दि० आ० अनि० बुध्यते, अस्मात् 'हलश्च' ३।३।१२१ इति घञ् बोधः। जरया स्तुत्या ( धातूनामनेकार्थत्वात् ) बोधो यस्य सं० १व०।

५

जामय: (१३)—याति [ आयाहि १८ ] कार्य्याणि प्रापयतीति यामि: 'नियो मि:' उ० ४।४३ इति आदे यस्य जत्वं जामिस्ता: १मा बहु०।

ज्योति: (२०)—'द्युत' दीप्तौ भ्वा० आ० से० द्योतते, अस्मात् 'द्युतेरिसिन्नादेश्च ज:' उ० २।११० द्योतते प्रकाशते तज्ज्योतिस्तत् १मा १व०।

तत् (१५) 'तनु' विस्तारे त० उ० से० तनोति, तनुते, अस्मात् क्विप्+तुक्। 'गमादीनामिति वक्तव्यम्' वा० ६।४।४० इत्यनुनासिकलोप:। 'त्यजितनियजिभ्यो डित्' उ० १।१३२ अदेर्डित्वाट्टिलोप:। सर्वनामसंज्ञा। तत् २या १व० क्लीबे।

तम् (१७)—तच्छब्दस्य पुंसि २या १व०।

ते (११)—[ ते १८ ]।

त्यम् (१६) 'त्यज' वयोहानौ भ्वा० प० अनि० त्यजति, अस्मात् 'त्यजितनि०' उ० १।१३२ इति। सर्वनामसंज्ञा।

त्वा (१३, १४, १७)—त्वामित्यस्य [ त्वाम् १८ ] 'त्वामौ द्वितीयाया:' ८।१।२३ इति त्वादेश:। २या १व०।

दिवि (२०)—दिवु [दिव: १८] धातो: क्विप्। ७मी १व०।

दिवे दिवे (१४)—दिवु धातो: [दिव: १८] का प्रत्यय: दिवा। वीप्सायां द्वित्वम्। 'सुपां सुलुक्०' ७।१।३९ इति शे भाव:॥ यद्वा दिव् शब्दस्य सप्तम्या: शेभाव:।

दूतम् (१२)—[ १८ ]

दृशीकम् (१५)—दृश [ दृशे १८ ] धातो: 'अलीकादयश्च' उ० ४।२५ इति कीकन्प्रत्ययान्तो निपात:। २या १व०।

देदिशती: (१३)—'दिश' दाने तु० प० अनि० दिशति, अस्मात् यङ्लुगन्तात् शतृप्रत्यय: तत: 'उगितश्च' ४।१।६ इति ङीप्। १मा १व०।

धियम् (१९)—'ध्यै' चिन्तायाम् भ्वा० प० अनि० ध्यायति, अस्मात् 'अन्येभ्योऽपि दृश्यते' ३।२।१७८ इति क्विप् अनुवर्त्य 'ध्यायते: सम्प्रसारणञ्च' वा० इति क्विप् सम्प्रसारणं च। 'हल:' ६।४।२ अङ्गावयवाद्धल: परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घ: स्यात्। ध्यायतीति धीस्ताम् २या १व०।

धिया (१४)—धी शब्दस्य ३या १व०।

न (१७)—[ १८ ]।

नम: (११, १४)—'णमु' प्रह्वत्वे शब्दे भ्वा० प० वे० नमति, अस्मात् 'सर्वधातुभ्योऽसुन्' उ० ४।१८९ इत्यसुन्। २या १व०।

नमोभि: (१७)—नमस् शब्दस्य ३या बहु०।

पर: (२०)—[ परमात् १८ ]।

पश्यन्ति (२०)—दृशधातो: [ दृशे १८ ] लटि प्रथम पु० बहु०।

प्रति (१६)—'प्रा' पूरणे अ० प० अनि० प्राति, 'प्रथ' प्रख्याने भ्वा० आ० से० प्रथते, आभ्यां बाहुलकाड्डतिः। अव्ययसंज्ञा। आभिमुख्ये।

प्रत्नस्य (२०)—'नश्च पुराणे प्रात्' वा० ५।४।२५ इति पुराणवाचिनः प्रशब्दात् न प्रत्ययः प्रत्नः (म्) तस्य ६ष्ठी १व०।

प्रह्वयसे—(२६) प्र पूर्वात् ह्वेधातोः [ आहुवे ] कर्मणिवाच्ये मध्यम पु० १व०।

भरन्तः (१४)—भृधातोः [ आभर १८ ] शतृप्रत्ययः हस्य भः। १मा बहु०।

मनसा (१९)—मनस्शब्दस्य [ मनः १८ ] ३या १व०।

मरुद्भिः (१९)—मृङ् धातोः [ मर्त्यस्य १८ ] 'मृग्रो रुतिः' उ० १।९४ इत्युतिप्रत्ययः। म्रियन्ते मारयन्ति वा मरुतस्तैः ३या बहु०।

मर्त्यः (१९)—मर्त्यशब्दस्य [ मर्त्यस्य १८ ] १मा १व०।

यत् (२०)—यज धातोः [यज्ञस्य १८] 'त्यजितनियजि०' उ० १।१३२ इत्यदिः। डित्वाट्टिलोपः। सर्वनामसंज्ञा। १मा १व०।

यजिष्ठम् (११)—यज धातोः [ यज्ञस्य १८ ] पचाद्यच् 'अतिशायने०' ५।३।५५ इतीष्ठन्। 'यस्येति च' ६।४।१४८ इत्यलोपः। तम् २या १व०।

यज्ञियाय (१५)—यज्ञशब्दात् [ यज्ञस्य १८ ] 'तदर्हति' ५।१।६३ इत्यस्याधिकारे 'यज्ञर्त्विग्भ्यां घखञौ' ५।१।७१ इति घः। 'आयनेय०' ७।१।२ इति घस्येय् आदेशः। यज्ञमर्हतीति यज्ञियस्तस्मै ४र्थी १व०।

रुद्राय (१५)—'रुदिर्' अश्रुविमोचने अ० प० से० रोदिति, अस्मात् 'रोदेर्णिलुक् च' उ० २।२२ इति रक् णेश्च लुक्। रोदितीति रुद्रः॥ रुतं वेदात्मकं शब्दं कल्पादौ ब्रह्मणे राति। रुत्+रा, दाने 'आतोऽनुपसर्गे कः' ३।२।३ इतिकः।

रेतसः (२०)—'री' गतिरेषणयोः क्र्या० प० अनि० रिणाति, अस्मात् 'सुरिभ्यां तुट् च' उ० ४।२०२ इत्यसुन् तुडागमश्च। रेतसस्य ६ष्ठी १व०।

वः (१२)—[ १८० ]।

वन्दध्यै (१७)—'वदि' अभिवादनस्तुत्योः भ्वा० आ० से० वन्दते, अस्मात् 'तुमर्थे सेसेन्०' ३।४।९ इति तुमर्थे अध्यै प्रत्ययः। वन्दध्यै=वन्दितुम्। अव्ययपदम्।

वयम् (१४)—अस्मच्छब्दस्य [ अस्मभ्यम् १८० ] १मा बहु०।

वस्तः (१४)—वस आच्छादने [ वस्तः १८० ] धातोः व्यत्ययेन कर्त्तरि तोसुन्, वस्तोः, व्यत्ययेन ओकारलोपः। यद्वा दोषावस्तः=दोषा रात्रेः तमसः इत्यर्थः वस्ता आच्छादयिता, तत्सम्बुद्धौ। वस आच्छादने+तृच्, सं०।

वायोः (१३)—'वा' गतिगन्धनयोः अ० प० से० वाति, अस्मात् 'कृवापा०' उ० १।१ इति उः। युक्। वातीति वायुस्तस्य ६ष्ठी १व०।

वारसन्तम् (१७)—'वृञ्' वरणे स्वा० उ० से० वृणोति, वृणुते, अस्माण्णन्तादघञ्।

'तदस्यास्त्यस्मिन्०' ५।२।९४ इति मतुप्। वाराः सन्ति अस्य स वारवान्तम् २या १व०।

वासरम् (२०)—'वस' स्नेहच्छेदापहरणेषु चु० प० से० वासयति, अस्मात् 'अर्त्तिकमि०' उ० ३।१३२ इत्यरः। २या १व०।

विवस्वभिः (१९)—विवस्वच्छब्दस्य [ विवस्वत् १८ ] ३या बहु०। व्यत्ययेन दलोपः।

विविड्ढि (१५)—विशते [ विश्ववेदसम् १८ ] यङ्लुगन्ताल्लोण्मध्यमैकवचने 'हुझल्भ्यो हेर्धिः' ६।४।१०१ इति हेर्धिः।

विशे विशे (१५)—विशतेः [ विश्ववेदसम् १८ ] क्विप्। 'व्रश्च०' ८।२।३६ इति षत्वं, जश्त्वचर्त्त्वे। 'सर्वस्य द्वे' ८।१।१ इत्यनुवर्त्त्य 'नित्यवीप्सयोः' ८।१।४ इति वीप्सायां द्वित्वम्। ४र्थी १व०।

विश्ववेदसम् (१३)—[१८]।

सचेत (१९)—'षच' सेचने सेवने च भ्वा० आ० से० सचते, धातोः लिङि प्रथम पु० १व०।

समुद्रवाससम् (१८)—सम्पूर्वात् उन्दी क्लेदने [ इन्दुभिः १८ ] धातोः 'स्फायितञ्चि०' उ० २।१३ इतिरक्। चन्द्रोदये सम्यक् उन्दन्ति क्लियन्ति आपो यत्र। सम् समीचीनाः उद्राः जलचरविशेषा अस्मिन्निति वा। सह मुद्रया मर्य्यादया वर्त्तते इति वा। समुत्पद्य भूतानि द्रवन्ति लयं गच्छन्ति अस्मिन्निति वा। 'वसेर्णित्' उ० ४।२१८ इति 'वस' आच्छादने इति धातोऽसुन् वासः। समुद्रे वासो यस्य तम् २या १व०।

सम्राजम् (१७)—सम् पूर्वात् 'राजृ' दीप्तौ भ्वा० उ० से० राजति, ते, धातोः क्विप्। 'मो राजि समः क्वौ' ८।३।२५ इति समो मस्य मकारः। सम्यक् राजते प्रकाशते इति सम्राट् तम् २या १व०।

सोमम् (१५)—षुधातोः [ सुषे १८० ] 'अर्त्तिस्तु०' उ० १।१४० इति मन्। सौति येन स सोमस्तम् २या १व०।

इति द्वितीयदशतिः द्वितीयखण्डश्च।

प्रथमम् (आग्नेयं) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। तृतीयः खण्डः। तृतीया दशतिः।

### अथ प्रथमा।

भार्गवः प्रयोग ऋषिः बार्हस्पत्योऽग्निर्ऋषिर्वा। पञ्चसामानि, तेषां त्रयाणां गेयगानानां सिन्धुच्चिदृषिः सैन्धुच्चितं च नाम (सैन्धुच्चितानि त्रीणि। आ० ग्रा०) गायत्री। अग्निः। विनियोगस्तु (अग्निं वो वृधन्तमिति। अवर्धन्त ह्येतर्हि यजमानमेव तया वर्द्धयन्ति। ता० म० ब्रा० १२।१२।१, २) इति वृद्धिकामयज्ञेऽग्निस्तुतौ।

३ १ २ ३ १ २ ३ १ २ ३ २
**अग्निं वो वृधन्तमध्वराणां पुरूतमम्।**
२ ३ २ ३ १ २
**अच्छा नप्त्रे सहस्वते॥ २१॥ (क)**

**पदपाठः।** अग्निम् २। वः २। वृधन्तम् २। अध्वराणाम् ६। पुरूतमम् २। अच्छा अ०। नप्त्रे ४। सहस्वते ४।

**अन्वयः।** [हे मनुष्याः!] वः (=यूयम्) अध्वराणां नप्त्रे (=नप्तारं) सहस्वते (=सहस्वन्तं) वृधन्तं (=वर्धमानं) पुरूतमम् अग्निम् अच्छा [गच्छत]।

**आधियाज्ञिकम्।** हे मनुष्याः! 'वः' यूयं, विभक्तिव्यत्ययः 'अध्वराणां' हिंसारहितानां यज्ञानां 'नप्त्रे' बन्धुं, विभक्तिव्यत्ययः 'सहस्वते' बलवन्तं, विभक्तिव्यत्ययः 'वृधन्त' ज्वालाभिर्वर्द्धमानं 'पुरूतमम्' अतिशयेन बहुम् 'अग्निम्' 'अच्छा' अभि गच्छत।

**आध्यात्मिकम्।** हे मनुष्याः! 'वः' यूयम् 'अध्वराणां' हिंसारहितानां यज्ञानां 'नप्त्रे' बन्धुं तदनुकूलमिति 'सहस्वते'

---

(क) ऋ०, अष्ट० ६। अध्या० ७। व० १०॥

बलवन्त मनन्तशक्तिमन्तं 'पुरुतमं' पुरून् बहून् दुष्टगुणान् तमयति तं दोषापकर्षकम् 'अग्निं' परमात्मानम् 'अच्छा' अभि गच्छत सुष्ठूपासीध्वम्।

**निरुक्तम्।** पुरु बहुनामसु ॥ ३।१३।१ ॥ अच्छाभेराप्तु-मिति शाकपूणिः ॥ ५।२८।२ ॥ सह इति बलनाम ॥ ३।९।७ ॥

## अथ द्वितीया।

बार्हस्पत्यो भरद्वाज ऋषिः। त्रीणि सामानि गेयगानानि। द्वयोः अग्निर्ऋषिः हर इति नाम च। तृतीयस्य वामदेव ऋषि-र्वामदेव्यमिति नाम च (अग्ने हैरसी इहवद्वामदेव्यं तृतीयम्। आ० ब्रा०)। गायत्री। अग्निः। विनियोगस्तु सत्पूर्णफलायतन-प्रजालाभे (ये वामदेव्येन स्तुवोत्तिष्ठन्ति ते सतः सदभ्युत्तिष्ठन्ति पूर्णात्पूर्णमायतनादायतनमन्तरिक्षायतना हि प्रजा ॥ ता० म० ब्रा० ४।८।१३)

३ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ १ ३
**अग्निस्तिग्मेन शोचिषा यꣳ सद्विश्वं न्यत्रिणम्।**
३ १ २ ३ २
**अग्नि र्नो वꣳसते रयिम् ॥ २२ ॥ (क)**

**पदपाठः।** अग्निः १। तिग्मेन ३। शोचिषा ३। यंसत् क्रि०। विश्वम् २। नि अ०। अत्रिणम् २। अग्निः १। नः ४। वंसते क्रि०। रयिम् २।

**अन्वयः।** अग्निः तिग्मन शोचिषा विश्वम् अत्रिणं नि-यंसत्। [अपि च] अग्निः नः रयिं वंसते।

**आधियाज्ञिकम्।** 'अग्निः' 'तिग्मेन' तीक्ष्णेन 'शोचिषा' तेजसा 'विश्वं' सर्वम् 'अत्रिणं' हिंसकं रोगादिकं तद्धेतुभूतं च

---

(क) ऋ०, अष्ट० ४। अध्या० ५। व० २६ ॥ 'य ꣳ सत्' इत्यत्र 'यासत्', 'वंसते' इत्यत्र 'वनते' ॥

'नियंसत्' निहन्तु, नाशयतु। अपि च 'अग्निः' 'नः' अस्मभ्यं 'रयिं' धनं 'वंसते' ददातु।

**आध्यात्मिकम्।** 'अग्निः' परमात्मा 'तिग्मेन' तीक्ष्णेन 'शोचिषा' तेजसा 'विश्वं' सर्वम् 'अत्रिणं' हिंसकमज्ञानादिकं 'नियंसत्' नाशयतु। अपि च 'अग्निः' स एव परमात्मा 'नः' अस्मभ्यं 'रयिं' धनं 'वंसते' ददातु।

**निरुक्तम्।** तिग्मं तेजतेरुत्साहकर्म्मणः ॥ १०।६।२ ॥ शोचिरिति ज्वलतो नाम ॥ २।२८।४ ॥

## अथ तृतीया।

गोतमवंश्यो वामदेव ऋषिः। द्वयोः साम्नोः अग्नि ऋषिः याममिति नाम ( यामि द्वे। आ० ब्रा० ) गायत्री। अग्निः। विनियोगस्तु अनपजय्यममुष्यलोकस्याधिपत्यप्राप्तौ ( यामं भवति ॥ एतेन वै यमोऽनपजय्यममुष्यलोकस्याधिपत्यमाश्नुतानपजय्यममुष्य-लोकस्याधिपत्यमश्नुते यामेन तुष्टुवानः॥ एतेन वै यमो यमꣳ स्वर्गंलोकमगमयत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्नच्यवते तुष्टुवानः स्तोमः॥ ता० म० ब्रा० ११।१०।२०, २१, २२ )

१ २ ३ २ ३ २ ३ २ ३ १ २ ३१र २र

**अग्ने मृड़ महाꣳ अस्यय आ देवयुं जनम्।**

३ १ २ ३ २ ३ १ २

**इयेथ बर्हिरासदम्॥ २३ ॥ (क)**

**पदपाठः।** अग्ने सं०। मृड़ क्रि०। महान् १। असि क्रि०। अयः १। आ अ०। देवयुम् २। जनम् २। इयेथ क्रि०। बर्हिः २। आसदम् २।

---

(क) ऋ, अष्ट० ३। अध्या० ५। व० ९॥ 'महाꣳ अस्यय आ' इत्यत्र 'महाँ असि य इमा' इतिपाठः।

**अन्वयः ।** [हे] अग्ने मृड़ । [यस्त्वम्] अयः बर्हिः आसदम् देवयुं जनम् आ इयेथ [स त्वं] महान् असि ।

**आधियाज्ञिकम् ।** हे 'अग्ने'! 'मृड़' अस्मान् धनदानेन सुखय । यस्त्वम् 'अयः' गन्ता, प्राप्तिशीलः 'बर्हिः' उत्तमासनम् 'आसदं' य आसीदति तं यज्ञार्थमिति 'देवयुं' देवानां कामयितारं 'जनं' यजनशीलम् 'आ इयेथ' सम्यक् प्राप्नोषि स त्वं 'महान्' असि' ।

**आध्यात्मिकम् ।** हे 'अग्ने' परमात्मन्! 'मृड़' अस्मान् ज्ञानदानेन सुखय । यस्त्वम् 'अयः' गन्ता, सर्वव्यापकः 'बर्हिः' 'आसदम्' उत्तमासनं य आसीदति तमुपासनार्थमिति, शुभगुणसम्पन्नं वा 'देवयुम्' आत्मनो दिव्यगुणानां कामयितारं 'जनं' यजनशील-मुपासकम् 'आ इयेथ' सम्यक् प्राप्नोषि स त्वं 'महान्' 'असि' ।

**निरुक्तम् ।** अयते इति गतिकर्मा ॥ ३।८।१४ ॥

## अथ चतुर्थी ।

मित्रावरुणवंश्यो वसिष्ठ ऋषिः । राक्षोघ्नं साम ऋषि-श्चाग्निः ( अग्नेराक्षोघ्ने । आ० ब्रा० ) गायत्री । अग्निः । विनियोगस्तु स्वस्त्ययनेष्टेः प्रथमाज्यभागस्यानुवाके ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
**अग्ने रक्षा णो अꣳ हसः प्रति स्म देव रीषतः ।**
१ २ ३ १ २
**तपिष्ठैरजरो दह ॥ २४ ॥ (क)**

**पदपाठः ।** अग्ने सं०। रक्षा क्रि० । नः २ । अंहसः ५ । प्रति अ० । स्म अ० । देव सं० । रीषतः २ । तपिष्ठैः ३ । अजरः १ । दह क्रि० ।

**अन्वयः ।** [हे] अग्ने! नः अंहसः रक्ष । [हे] देव! अजरः [त्वं] रीषतः तपिष्ठैः [तेजोभिः] प्रतिदह स्म (=पादपूरणार्थकः)।

---

(क) ऋ०, अष्ट० ५ । अध्या० २ । व० २० ॥ 'स्म' इत्यत्र 'ष्म' इति पाठः ।

**आधियाज्ञिकम्।** हे 'अग्ने'! 'नः' अस्मान् 'अंहसः' पापात् 'रक्षा' रक्ष, पाहि। हे 'देव' द्योतमान! 'अजरः' अशिथिलस्त्वं 'रीषतः' हिंसतो दुःखदातॄन् 'तपिष्ठैः' अतिशयेन, तापकैस्तेजोभिः 'प्रतिदह' निःशेषेण भस्मीकुरु।

**आध्यात्मिकम्।** हे 'अग्ने' पापनाशक परमात्मन्! 'नः' अस्मान् 'अंहसः' पापात् 'रक्षा' रक्ष, पाहि। हे 'देव' स्वीयविभूतिभिर्द्योतमान! 'अजरः' जरारहितः, सदा समभावेन वर्त्तमानस्त्वं 'रीषतः' हिंसतो दुःखदातॄन् रोगादीन् कामक्रोधादींश्च 'तपिष्ठैः' अतिशयेन तापकैस्तेजोभिः 'प्रतिदह' निःशेषेण भस्मीकुरु।

**निरुक्तम्।** अंहो हन्ते निरूढ़ोपधाद्विपरीतात्॥ ४।२५।४॥ तपिष्ठेस्तप्ततमैः तृप्ततमैः प्रपिष्टतमैरिति वा॥ ६।१२।१॥

## अथ पञ्चमी।

भरद्वाज ऋषिः। राक्षोघ्नं साम ऋषिस्त्वाग्निः (अग्नेः राक्षोघ्ने। आ० ब्रा०) गायत्री। अग्निः। विनियोगस्तु पूर्ववत्।

१ २ ३ १र २र ३ १ ३ १ २
**अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः।**
३ १ २ ३ १ २
**अरं वहन्त्याशवः॥ २५॥ (क)**

**पदपाठः।** अग्ने सं०। युङ्क्ष्वा क्रि०। हि अ०। ये १। तव ६। अश्वासः १। देव सं०। साधवः १। अरम् अ०। वहन्तिः क्रि०। आशवः १।

**अन्वयः।** [हे] देव अग्ने! ये साधवः आशवः तव अश्वासः अरं [त्वां] वहन्ति, हि [तान् रथे] युङ्क्ष्वा।

---

(क) ऋ०, अष्ट० ४। अध्या० ५। व० २९॥ 'युङ्क्ष्वा' इत्यत्र 'युक्ष्वा' 'आशवः' इत्यत्र 'मन्यवे'।

**आधियाज्ञिकम्** । हे 'देव' द्योतमान 'अग्ने' ! 'ये' 'साधवः' साधनभूताः 'आशवः' आशुकारिणः 'तव' 'अश्वासः' अश्वाज्वालारूपाः [ अग्निरश्वोभूत्वा देवेभ्यो हविरवहत् । ऐत० ब्रा० ] 'अरं' पर्य्याप्तं त्वां 'वहन्ति' प्रापयन्ति, 'हि' नूनं तान् रमणसाधन-यज्ञरूपरथे 'युङ्क्ष्व' योजय [ देवरथो वा एष यद्यज्ञः । ऐत० ब्रा० । २।५।५ । ]

**आध्यात्मिकम्** । हे 'देव' दिव्यगुणयुत 'अग्ने' परमात्मन् ! 'ये' 'साधवः' साधनभूताः 'आशवः' आशुकारिणः 'तव' 'अश्वासः' अश्वोभूता व्यापका गुणाः 'अरं' पर्य्याप्तं त्वां 'वहन्ति' प्रापयन्ति 'हि' नूनं तान् भवद्रमणसाधनेऽस्मच्छरीररूपरथे 'युङ्क्ष्व' योजय [आत्मानं रथिनं विद्धि, शरीरं रथमेव तु । तै० उ० भृगु व०, २ अ०]

**निरुक्तम्** । आशुइति क्षिप्रनाम ॥ ३।८।१५ ॥

## अथ षष्ठी ।

वसिष्ठ ऋषिः । वैश्वमनसं साम, ऋषिश्च विश्वमनाः ( वैश्वमनसं च । आ० ब्रा० ) गायत्री । अग्निः । विनियोगस्तु अग्निन्दूत ( ३ मं० ) मितिवत् ।

१ २ ३ १ २ ३ २
नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।
२ १ २
सुवीर मग्न आहुत ॥ २६ ॥ (क)

**पदपाठः** । नि अ० । त्वा २ । नक्ष्य सं० । द्युमन्तम् २ । धीमहि क्रि० । वयम् १ । सुवीरम् २ । अग्ने सं० । आहुत सं० ।

---

(क) ऋ०, अष्ट० ५ । अध्या० २ । व० १९ ॥ 'धीमहि वयं'मित्यत्र 'देव धीमहि' इति पाठः ।

**अन्वयः ।** [हे] नक्ष्य विश्पते आहुत अग्ने ! द्युमन्तं सुवीरं त्वा वयं निधीमहे ।

**आधियाज्ञिकम् ।** हे 'नक्ष्य' उपगन्तव्य, प्राप्तव्य ! 'विश्पते' प्रजानां पालक ! 'आहुत' समन्ताद्धविर्भिराहुत ! 'अग्ने' ! 'द्युमन्तं' दीप्तिमन्तं 'सुवीरं' कल्याणस्तोतृकं 'त्वा' त्वां 'वयम्' ऋत्विजः 'निधीमहे' नितरामाहितं कुर्म्मः ।

**आध्यात्मिकम् ।** हे 'नक्ष्य' उपगन्तव्य, प्राप्तव्य ! 'विश्पते' प्रजानां पालक ! 'आहुत' सम्यग्धरात ! 'अग्ने' परमात्मन् ! 'द्युमन्त' दीप्तिमन्तं, ज्योतिर्मयं 'सुवीरं' कल्याणस्तोतृकं 'त्वा' त्वां 'वयम्' उपासकाः 'निधीमहे' नितरां ध्यायेम ।

**निरुक्तम् ।** नक्षतिर्गतिकर्मा ॥ ३।८।१४ ॥ नक्षतिर्व्याप्तिकर्म्मा ॥ ३।१०।२ ॥ सर्वस्य पातारं वा पालयितारं वा विश्पतिम् ॥ ४।२६।१ ॥ द्युमदिति ज्वलतिकर्मा ॥ २।२८।३ ॥ द्युमान् द्योतनवान् ॥ ६।१९।१ ॥ सुवीरा वीरवन्तः कल्याणवीरा वा ॥ १।७।१ ॥

## अथ सप्तमी ।

आङ्गिरसो विरूप ऋषिः । आर्षेयं साम, अग्निऋषिः ( अग्नेश्चार्षेयम् । आ० ब्रा० ) गायत्री अग्निः । विनियोगस्तु दर्शपूर्णमासेष्टेः आग्नेयक्रतोरनुवाके ।

३ २ ३ २ ३ २ ३ १र २र ३ २ ३ २
**अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।**

३ १र २र
**अपाᳬं रेताᳬंसि जिन्वति ॥ २७ ॥ (क)**

**पदपाठः ।** अग्निः १ । मूर्द्धा १ । दिवः ६ । ककुत् १ । पतिः १ । पृथिव्याः ६ । अयम् १ । अपाम् ६ । रेतांसि २ । जिन्वति क्रि० ।

(क) ऋ०, ६।३।२९ ॥ य० १३।४ ।

**अन्वयः ।** मूर्द्धा ककुत् दिवः पृथिव्याः [च] पतिः अयम् अग्निः अपां रेतांसि जिन्वति ।

**आधियाज्ञिकम् ।** 'मूर्द्धा' शिरोवच्छ्रेष्ठः 'ककुत्' महान् 'दिवः' प्रकाशवतः सूर्य्यादेः 'पृथिव्याः' प्रकाशरहितस्य जगतःच 'पतिः' पालकः 'अयम्' प्रत्यक्षः 'अग्निः' 'अपाम्' 'रेतांसि' स्थावरजङ्ग-मात्मकानि भूतानि 'जिन्वति' प्रीणयति, यज्ञाहुतिद्वारेणेति ।

**आध्यात्मिकम् ।** 'मूर्द्धा' शिरोवच्छ्रेष्ठः 'ककुत्' महान् 'दिवः' प्रकाशवतः सूर्य्यादेः 'पृथिव्याः' प्रकाशरहितस्य जगतः च 'पतिः' पालकः 'अयं' प्रसिद्धः, हृद्देशेऽनुभूयमानः 'अग्निः' परमात्मा 'अपां' व्यापनशीलायाः प्रकृतेस्तत्कार्य्याणाञ्च, प्राणानां, जलानां, कर्म्मणां वा'रेतांसि' वीर्य्याणि, सारभूतानि स्थावरजङ्गमात्मकानि भूतानि 'जिन्वति' प्रीणयति, रचयितुं जानाति ।

**निरुक्तम् ।** आप आप्नोतेः ॥ ६।२६।२ ॥ जिन्वतिर्गतिकर्मा ॥२।८।१४॥ [गतिर्ज्ञानमतो जानाति रचयितुमिति] जिन्वतिः प्रीतिकर्मा ॥६।२२।६॥ ककुह इति महन्नाम ॥३।१३।५ ॥

## अथाष्टमी ।

शुनःशेप ऋषिः । सोम साम, ऋषिस्तु नोक्तः (सोम साम । आ० ब्रा०) गायत्री । अग्निः । विनियोगस्तु राज्याधिपत्ययशोलाभे (यथा वा इमा अन्या ओषधय एवꣳसोम आसीत् स तपोऽतप्यत स एतत् सोमसामापश्यत् तेनराज्यमाधिपत्यमगच्छत् यशोऽभवत् राज्यमाधि-पत्यङ्गच्छति यशोभवति सोम साम्ना तुष्टुवानः । ता० म० ब्रा० ११।३।८)

३ २ ३ २ ३ १ २ ३ १ २ ३ १र २र
**इममूषु त्वमस्माकꣳ सनिं गायत्रं नव्याꣳसम् ।**
१ २ ३ २ ३ १ २
**अग्ने देवेषु प्रवोचः ॥ २८ ॥ (क)**

---

(क) ऋ० १।२।२२ ॥

**पदपाठः ।** इमम् २। ऊ अ०। सु अ०। त्वम् १। अस्माकम् ६। सनिम् २। गायत्रम् २। नव्यांसम् २। अग्ने सं०। देवेषु ७। प्रवोचः क्रि०।

**अन्वयः ।** [हे] अग्ने! त्वम् अस्माकम् इमं सनिं नव्यांसं गायत्रम् ऊ (=च) देवेषु सु प्रवोचः।

**आधियाज्ञिकम् ।** हे 'अग्ने' 'त्वम्' 'अस्माकम्' 'इमं' 'सनिं' हविर्दानं 'नव्यांसं' नवतरं 'गायत्रं' स्तुतिरूपं वचः 'ऊ' च 'देवेषु' देवानामग्रे 'सु' सुष्ठु 'प्रवोचः' प्रोक्तवान्।

**आध्यात्मिकम् ।** हे 'अग्ने' अनन्तविद्यामय परमेश्वर! 'त्वम्' 'अस्माकम्' 'इमं' 'सनिं' कर्म्मफलानां संविभक्तारं 'नव्यांसं' नित्यनवबोधप्रदं 'गायत्रं' गायत्री प्रगाथा येषु तं वेदचतुष्टयं 'देवेषु' सृष्ट्यादौ जातेषु पुण्यात्मसु अग्निवाय्वादित्याङ्गिरस्सु 'सु' सुष्ठु 'प्रवोचः' प्रोक्तवान् [पूर्वेषामपि गुरुः कालेनानवच्छेदात्। योग० पा० १।२६] [तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्य्यात् सामवेदः श० ब्रा० ११।२।५।८॥ यान् मन्त्रानपश्यत् स आङ्गिरसो वेदोऽभवत्। गोपथ ब्रा०॥ अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ श्रुतीरथर्वाङ्गिरसीः कुर्य्यादित्यविचारयन्॥ मनुः अ० १।२३॥ अ० ११।३३]।

**निरुक्तम् ।** गायत्रं गायतेः स्तुतिकर्म्मणः॥ १।८।१॥ नव्यमिति नवनाम॥ ३।१९।२५॥

## अथ नवमी ।

अग्निर्वंश्यो गोपवन ऋषिः। एकं साम गौपवनं, गोपवनश्चर्षिः (गौपवनस्य। आ० ब्रा०) विनियोगस्तु व्योमविश्वदेवस्तुतपञ्चशारदीयप्रकरणे आज्यशस्त्रे।

१ २ ३ १ ३ १र २र
तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः ।
१ २ ३ १२
स पावक श्रुधी हवम् ॥ २९ ॥ (क)

**पदपाठः** । तम् २ । त्वा २ । गोपवनः १ । गिरा ३ । जनिष्ठत् क्रि० । अग्ने सं० । अङ्गिरः सं० । सः १ । पावक सं० । श्रुधी क्रि० । हवम् २ ।

**अन्वयः** । [हे] अग्ने ! तं त्वा गोपवनः गिरा जनिष्ठत् । [हे] पावक ! अङ्गिरः ! स [त्वं] हवं श्रुधी ।

**आधियाज्ञिकम्** । हे 'अग्ने' यज्ञाग्ने ! 'तं' पूर्वोक्तं 'त्वा' त्वां 'गोपवनः' गोभिर्वेदवाग्भिः पवनं शोधनं यस्य स स्वाध्यायशीलो वेदज्ञः 'गिरा' स्तुतिरूपया वाचा 'जनिष्ठत्' जनयति वर्द्धयति । हे 'पावक' शोधक ! 'अङ्गिरः' अङ्गारवन् प्राणप्रिय वा ! 'सः' एवंविधः त्वं 'हवम्' आह्वानं, स्तोत्रमिति 'श्रुधी' शृणु, अस्माकमनुग्रहीतुमङ्गीकुरु ।

**आध्यात्मिकम्** । हे 'अग्ने' परमात्मन् ! 'तं' प्रसिद्धं 'त्वा' त्वां 'गोपवनः' स्वाध्यायशीलो वेदज्ञः [स्वाध्यायादिष्टदेवता सम्प्रयोगः । योग० पा० २।४४] 'गिरा' स्तुत्या 'जनिष्ठत्' वर्द्धयति [स्तूयमाना हि देवता वर्द्धन्ते ]। हे 'पावक' पवित्रकर्त्तः ! 'अङ्गिरः' अङ्गानां रस ! प्राणप्रिय ! सर्वत्रगन्तः वा 'सः' एवंविधः त्वं 'हवम्' आह्वानं, स्तोत्रमिति 'श्रुधी' शृणु, अस्माकमनुग्रहीतुमङ्गीकुरु च ।

**निरुक्तम्** । अङ्गारेष्वङ्गिराः । अङ्गारा अङ्कनाः ( अञ्चनाः ) ॥ ३।१७।१ ॥ गीरिति वाङ्नाम ॥ २।२३।१ ॥ हवं ह्वानम् ॥ १०।२।१ ॥ श्रुधी शृणु ॥ १०।२।१ ॥

(क) ऋ० ६।५।२३ ॥ 'त' मित्यत्र 'यं' 'जनिष्ठत्' इत्यत्र 'चनिष्ठत्' ।

## अथ दशमी ।

गौतमो वामदेवऋषिः । एकं सूर्यसाम, वसुरोचिः सूर्यवर्च्चा ऋषिः । गायत्री । अग्निः । विनियोगस्तु पशुपर्य्यग्निकरणंकार्य्ये, प्रातरनुवाकप्रकरणे आग्नेयक्रतोराश्विनशस्त्रे ।

२ ३ १ २ ३ २ ३ २ ३ १
परिवाजपतिः कविरग्नि र्हव्यान्यक्रमीत् ।
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे ॥ ३० ॥ (क)

**पदपाठः ।** परि अ० । वाजपतिः १ । कविः १ । अग्निः १ । हव्यानि २ । अक्रमीत् क्रि० । दधत् १ । रत्नानि २ । दाशुषे ४ ।

**अन्वयः ।** वाजपतिः कविः दाशुषे रत्नानि दधत् अग्निः हव्यानि परि अक्रमीत् ।

**आधियाज्ञिकम् ।** 'वाजपतिः' अन्नस्वामी (ख) [अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपजायते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । मनुः, अ० ३।७६] 'कविः' क्रान्तदर्शी 'दाशुषे' हविर्दत्तवत्ते यजमानाय 'रत्नानि' रमणीयानि धनानि 'दधत्' प्रयच्छन् 'अग्निः' 'हव्यानि' हवींषि 'परि अक्रमीत्' परिक्रामति, व्याप्नोति ।

**आध्यात्मिकम् ।** 'वाजपतिः' अन्नस्वामी 'कविः' क्रान्तदर्शी 'दाशुषे' सर्वस्य दात्रे उपासकाय 'रत्नानि' रमणीयाणि धनानि 'दधत्' प्रयच्छन् 'अग्निः' परमात्मा 'हव्यानि' दातुं ग्रहीतुं वा योग्यानि वस्तूनि 'परिअक्रमीत्' परिक्रामति, व्याप्नोति ।

**निरुक्तम् ।** वाज इत्यन्ननाम ॥ २।७।४ ॥ कविर्मेधावी क्रान्तदर्शनो भवति कवतेर्वा ॥ १२।१३।१ ॥ दाशुषे दत्तवते ॥ ११।११।१ ॥ रत्नमिति धननाम ॥ २।१०।८ ॥

---

(क) ऋ० ३।५।१५ ॥ (ख) परिवाजपतिः कविरित्येष हि वाजानां पतिः । ऐत० ब्रा०, पं० २ । अ० १ । ख ५ ॥

## अथैकादशी ।

काण्वः प्रस्कण्व ऋषिः। एकं सूर्य्यसाम, वसुरोचिः सूर्यवर्चा ऋषिः। गायत्री। सूर्य्यः। विनियोगस्तु आश्विनशस्त्रप्रकरणे सौर्यक्रतौ।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
**उदु त्यं जातवेदसं देवं वहन्ति केतवः।**

३ १र २र ३ १ २
**दृशे विश्वाय सूर्य्यम् ॥ ३१ ॥ (क)**

**पदपाठः।** उत् अ०। उ अ०। त्यम् २। जातवेदसम् २। देवम् २। वहन्ति क्रि०। केतवः १। दृशे अ०। विश्वाय ४। सूर्य्यम् २।

**अन्वयः।** केतवः त्यं जातवेदसं देवं सूर्य्यं विश्वाय दृशे उद्वहन्ति 'उ इति पादपूरणः'।

**आधियाज्ञिकम्।** 'केतवः' सूर्य्यरश्मयः 'त्यं' तं 'जातवेदसं' जातधनं, प्राणिनां वेदितारं वा 'सूर्य्यं' सर्वस्य प्रेरकमादित्यं 'विश्वाय' 'दृशे' विश्वं द्रष्टुं, सर्वेषां प्राणिनां सन्दर्शनाय 'उदुवहन्ति' उत्कृष्टं प्रकाशयन्ति विज्ञापयन्ति।

**आध्यात्मिकम्।** 'केतवः' ईश्वरस्य सृष्टिरचनादिविविधा गुणाः 'त्यं' तं 'जातवेदसं' प्राणिनां वेदितारं 'सूर्य्यं' सर्वस्य प्रसवितारं परमात्मानं 'विश्वाय' 'दृशे' सर्वेषां प्राणिनां सन्दर्शनाय 'उद्वहन्ति' उत्कृष्टं प्रकाशयन्ति, विज्ञापयन्ति।

**निरुक्तम्।** 'उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्य्यमिति' ॥ १२।१५।१ ॥ जातवेदाः कस्मात् ॥ जातानि वेद। जातानि वैनं विदुः। जाते जाते विद्यत इति वा। जातवित्तो वा जातधनः। जातविद्यो वा जातप्रज्ञानः।

(क) ऋ० १।४।७ ॥ य० ३३।३१॥

यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वान्तृतून् पशवोऽग्निमभिसर्पन्तीति च ॥ ७।१९।२ ॥ सूर्यः सर्त्तेर्वा। सुवतेर्वा। स्वीर्य्यते र्वा ॥ १२।१४।२ ॥

## अथ द्वादशी।

काण्वो मेधातिथि र्ऋषिः। काव्वं साम, वसुरोचि र्ऋषिः (काव्वञ्च वसुरोचिषः। आ॰ ब्रा॰) गायत्री। अग्निः। विनियोगस्तु (काव्वं भवति॥ लोकविन्दु साम विन्दते लोकं काव्वेन तुष्टुवानः। ता॰ म॰ ब्रा॰ ११।५।२४, २५) अभिलषितस्थानप्राप्तौ।

३ २ ३ १र २र ३ १ २ ३ २
**कविमग्नि मुपस्तुहि सत्यधर्म्माणमध्वरे।**
३ १ २ ३ १ २
**देव ममीवचातनम् ॥ ३२ ॥ (क)**

**पदपाठः।** कविम् २। अग्निम् २। उपस्तुहि क्रि॰। सत्यधर्म्माणम् २। अध्वरे ७। देवम् २। अमीवचातनम् २।

**अन्वयः।** [हे स्तोतः] कविं सत्यधर्म्माणम् अमीवचातनं देवम् अग्निम् अध्वरे उप स्तुहि।

**आधियाज्ञिकम्।** हे स्तोतः! 'कविं' क्रान्तदर्शिनं 'सत्यधर्म्माणं' सत्योधर्म्मो यस्य तं 'अमीवचातनम्' अमीवानां रोगाणां चातनं नाशकं 'देवं' द्योतमानम् 'अग्निम्' 'उपस्तुहि' उपेत्य स्तुतिं कुरु।

**आध्यात्मिकम्।** हे स्तोतः! 'कविं' क्रान्तदर्शिनं 'सत्यधर्म्माणं' सत्यो धर्म्मो न्यायो यस्य तं 'अमीवचातनम्' अमीवानामविद्यादिदोषाणां नाशकं 'देवं' दिव्यगुणोपेतम् 'अग्निं' परमात्मानम् 'उपस्तुहि' उपेत्य स्तुतिं कुरु।

---

(क) ऋ॰ १।१।२३ ॥

**निरुक्तम्** । सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा ॥ ३।१३।१९ ॥ एतेः कारितं च यकारादिञ्चान्तकरणमस्तेः शुद्धं च सकारादिं च ॥ १।१३।२ ॥

## अथ त्रयोदशी ।

अम्बरीषनृपतेः पुत्रः सिन्धुद्वीपस्त्वष्टृपुत्रस्त्रिशिरा वा ऋषिः, त्रित आप्त्यो वा । ( सूर्य्यवर्चसः सामनी द्वे, वसुरोचिषी वा, पारावतेः, काश्मीते वा, कापोते वा, वासुमान्दे वा । आ० ब्रा० ) द्वे सामनी, काश्मीतं, कापोतं, वासुमन्दं वा नाम । सूर्य्यवर्चा, पारवतः पुत्रो वसुरोचिः, काश्मीतः, कापोतः, वसुमन्दो वा ऋषिः । गायत्री । आपः । विनियोगस्तु प्रातरनुवाकप्रकरणे आश्विनशस्त्रे ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये ।**
२उ ३ १ २
**शंयो रभिस्रवन्तु नः ॥ ३३ ॥ (क)**

**पदपाठः** । शम् अ० । नः ६ । देवीः २ । अभिष्टये ४ । शम् अ० । नः ६, ४ । भवन्तु क्रि० । पीतये ४ । शंयोः अ० । अभिस्रवन्तु क्रि० । नः ६, ४ ।

**अन्वयः** । देवीः (=देव्यः) [आपः] नः अभिष्टये शं भवन्तु । नः पीतये शं [भवन्तु] । नः शंयोः अभिस्रवन्तु [च] ।

**आधियाज्ञिकम्** । 'देवीः' देव्यः, विभक्तिव्यत्ययः, आपः 'नः' अस्माकम् 'अभिष्टये' यज्ञाय 'शं' सुखकराः 'भवन्तु' । यद्वा 'शं' सुखं 'भवन्तु' भावयन्तु । 'नः' अस्माकं 'पीतये' पानाय 'शं' सुखकराः भवन्तु । 'नः' अस्माकं उपरि 'शंयोः' सुखम् 'अभिस्रवन्तु' अत्यर्थं सिञ्चन्तु । यद्वा 'शंयोः' शं शमनं रोगाणामिति योः यापनं भयानामिति 'अभिस्रवन्तु' ।

---

(क) ऋ० ७।६।५ ॥ 'शन्नो' इत्यत्र 'आपो इति ।

**आध्यात्मिकम्।** 'देवीः' देव्यः दिव्याः [आपः] परमात्मनो-व्यापकप्रकाशशक्तयः 'शं' कल्याणं 'भवन्तु' भावयन्तु प्रयच्छन्तु, 'नः' अस्मभ्यं 'पीतये' पूर्णानन्दभोगेन तृप्तये 'शं' कल्याणं प्रयच्छन्तु। 'नः' अस्मभ्यं 'शंयोः' सुखम् 'अभिस्रवन्तु' सर्वतः सिञ्चन्तु।

**निरुक्तम्।** इष्टिरिति यज्ञनाम॥ ३।१८।५॥ पीतये पानाय॥ १२।४।१॥ शंयुः (सुखंयुः) शमनं च रोगाणां, यावनं च भयानाम्॥ ४।२१।२॥ स्रवतीति गतिकर्मा॥ ३।८।१४॥ शमिति सुख नाम॥ ३।१३।११॥

## अथ चतुर्दशी।

कविपुत्र उशना ऋषिः। (गोराङ्गिरसस्य सामनी द्वे गोतमस्य वा मनाज्ये। आ० ब्रा०) द्वे साम्नी मनाज्यमिति नाम, आङ्गि-रसो गुरुऋषिर्गोतमो वा। गायत्री। अग्निः। विनियोगस्तु प्रातरनुवाकप्रकरणे आग्नेयक्रतोः आश्विनशस्त्रे।

१ २ ३ १र २र २ १ २
**कस्य नूनं परीणसि धियो जिन्वसि सत्पते।**
१ २ ३ १ २ ३ १ २
**गोषाता यस्य ते गिरः॥ ३४॥ (क)**

**पदपाठः।** कस्य ६। नूनम् अ०। परीणसि ७। धियः २। जिन्वसि क्रि०। सत्पते सं०। गोषाता ७। यस्य ६। ते ६। गिरः १।

**अन्वयः।** [हे] सत्पते! [अग्ने] [त्वं] कस्य परीणसि (=परीणसः) धियः नूनं जिन्वसि? यस्य ते (=त्वद्विषयिण्यः) गिरः गोषाता (=गोषातौ).[भवन्ति]

(क) ऋ० ८।८।८॥ 'परीणसि' इत्यत्र 'परीणसः' इति, 'सत्पते' इत्यत्र 'दम्पते'।

**आधियाज्ञिकम्।** हे 'सत्पते' सतां सज्जनानां यजनशीलानां पते पालक ! अग्ने ! त्वं 'कस्य' कीदृस्य जनस्य 'परीणसि परीणसः विभक्तिव्यत्ययः, बहूनि 'धियः' कर्म्माणि 'नूनं' निश्चितं जिन्वसि' प्रीणयसि, पूरयसीति ? अस्योत्तरमाह, 'यस्य' यजनशीलस्य 'ते' त्वद्विषयिण्यः 'गिरः' स्तुतयः 'गोषाता' गोषातौ गवां सोमानामाज्याहुतीनां वा सातौ सम्भजने दाने भवन्ति तस्यैव। यः स्तुतिभिः सह सोमाहुतीराज्याहुतीर्वा [ आज्याहुतिरेव सोमाहुतिः। श० ब्रा०] तुभ्यं ददाति तस्मै त्वं परितुष्यसि।

**आध्यात्मिकम्।** हे 'सत्पते' सतां सज्जनानामुपासकानां पालक परमात्मन्! त्वं 'कस्य' कीदृशस्य जनस्य 'परीणसि' बहूनि 'धियः' कर्म्माणि 'नूनं' निश्चितं 'जिन्वसि' प्रीणयसि पूरयसीति ? अस्योत्तरमाह, 'यस्य' उपासकस्य 'ते' त्वद्विषयिण्यः 'गिरः' स्तुतयः पञ्चमहायज्ञाद्यनुष्ठानेन 'गोषाता' गवां ब्रह्मवर्चसां सातौ लाभे भवन्ति तस्यैव। [यज्ञेन यज्ञमयजन्त देवा स्तानि धर्म्माणि प्रथमान्यासन्। तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः। य० ३१।१६] [स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। गी० अ० १८। श्लो ४६] यद्वा 'धियः' प्रज्ञाः 'परीणसि' परीणसः बह्वीः 'जिन्वसि' प्रीणयसि, बुद्धेस्तृप्तिकारको भवसीति [तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। ऋ० १।६।१५॥ 'धियं' 'जिन्वम्' यो बुद्धेस्तृप्तिकर्त्ता तम्]।

**निरुक्तम्।** परीणसेति बहुनाम॥ ३।१३।१॥

# अथ व्याकरणम्।

अग्निः (२२, २२, २७, ३०)—[१द]।

अग्निम् (२१, ३२)—[१द]।

अग्ने (२३, २४, २५, २६, २८, २९)—[१द]।

अङ्गिरः (२९)—अगि धातोः [अग्निः १द] 'अङ्गते रसि रि रुडागमश्च' उ० ४।२३६ इत्यसि-
रि रुडागमश्च। अङ्गति गच्छति प्राप्नोति जानाति वा सोऽङ्गिरास्तस्य सं० १व०।

अच्छा (२१)—नञ्+'छो' छेदने दि० प० अनि० छ्यति,+क। 'निपातस्य च' ६।३।१२६
इति दीर्घः।

अजरः (२४)—नास्ति जरा [जराबोध २द] यस्य सोऽजरः १मा १व०।

अत्रिणम् (२२)—'अद' भक्षणे अ० प० अनि० अत्ति, अस्मात् 'अदेस्त्रिनिश्च' उ० ४।६८ अत्ति
भक्षयति विनाशयतीति अत्री तम् २या १व०।

अध्वराणाम् (२१)—[२द]।

अध्वरे (३२)—७मी १व०।

अपाम् (२७)—'आप्लृ' व्याप्तौ स्वा० प० अनि० आप्नोति,+क्विप् 'आप्नोते र्ह्रस्वश्च' उ० २।५८
नित्यबहुवचनत्वं स्त्रीत्वं च। आप्नोतीत्यापस्तासाम् ६ष्ठी बहुव०।

अभिष्टये (३३)—अभि+'इष्' गतौ दि० प० से० इष्यति, इच्छायाम् तु० प० से०
इच्छति, यजतेर्वा [यज्ञस्य १द] भावे क्तिन्। 'ग्रहिज्या०' ६।१।१६ एषां किति
ङिति च सम्प्रसारणं स्यात्। 'व्रश्च भ्रस्ज०' ८।२।३६ इति षत्वे ष्टुत्वम्।
'शकन्ध्वादिषु०' वा० १।१।६४ इति पररूपत्वे सवर्णदीर्घाभावः। अभिष्टिस्तस्यै
४र्थी १व०।

अभिस्रवन्तु (३३)—नञ्+'भा' दीप्तौ अ० प० अनि० भाति,+कि, अव्ययसंज्ञा। 'स्रु'
गतौ भ्वा० प० अनि० स्रवति, लोटि प्रथम पु० १व०।

अमीवचातनम् (३२)—अमधातोः [अमेः २द०] 'शेवय०' उ० १।१५४ इति वन् प्रत्यये इडां-
गमे च निपातनात्साधुः। यद्वा अमेरीवः१ 'चते' याचने भ्वा० उ० से० चतति,
ते, अस्माद्धिंसार्थाण्णिजन्तान्नद्यादित्वाल्लुः, णेरनादेशः, 'णेरनिटि' ६।४।५१
इति णेर्लोपः। अमीवं रोगं चातयति नाशयतीत्यमीवचातनस्तम् २या १व०।

अयः (२३)—इण्धातोः [इतराः १द०] 'पुंसि संज्ञायां घः' ३।३।११८ इति घः। एति
गच्छतीत्ययः १मा १व०। 'अय' गतौ भ्वा० आ० से० अयते, इति धातोः
कर्त्तरि पचाद्यच् वा।

अयम् (२७)—पुंसि, १मा १व०।

अरम् (२५)—'ऋ' गतिप्रापणयोः भ्वा० प० अनि० ऋच्छति, जु० प० अनि० इयर्ति, आभ्यां पचाद्यच्। अव्ययसंज्ञा।

अश्वासः (२५)—अश्वशब्दात् [अश्वम् २द०] जसि 'आज्जसेरसुक्' ७।१।५० अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात्।

असि (२३)—[१द०]

अस्माकम् (२८)—६ष्ठी बहु व०।

अंहसः (१४)—'अम' गत्यादिषु भ्वा० प० से० अमति, अस्मात् 'अमेर्हुक् च' उ० ४।२१३ इत्यसुन् हुक् च। अमन्ति प्राप्नुवन्ति दुःखान्यनेन तत् अंहः पापः तस्मात् ५मी १व०।

आ इयेथ (२३)—आ पूर्व्वादिण्धातोः 'छन्दसि लुङ् लिटः' ३।४।६ धात्वर्थानां संबन्धे सर्वकालेष्वेते वा स्युः, इति सामान्ये लिट्। 'व्यवहिताश्च' १।४।८२ इति साधुः।

आशवः (२५)—अशूधातोः [अश्वम् २द०] 'कृवापा०' उ० १।१ इति उः। १मा बहुव०।

आसदम् (२३)—आङ् पूर्वात् सीदतेः [निषत्सि १द०] अच्। य आसीदति तम् २या १व०।

आहुत (२०)—सं० १व०।

इमम् (२८)—२या १व० पुंसि।

उ (३१)—[ऊ १द०] पादपूरणार्थम्।

उत् (३१)—ऊर्द्ध्वार्थेऽव्ययम्।

उपस्तुहि (३२)—उपपूर्वात् ष्टुञ् धातोः लोटि उत्तमपु० १व० हिः।

ऊ (२८)—[१द०]।

ककुत् (२७)—कंसुखं कौति, 'कु' शब्दे अ० प ०अनि० कौति, क्विप्+तुक्, पृषोदरादित्वात्साधुः। यद्वा ककुहः महान्। ह्रस्य त्।

कविः (३०)—'कुङ्' शब्दे भ्वा० आ० अनि० कवते, तु० प० अनि० कुवति, आभ्याम् 'अच इः' उ० ४।१३९ इति इः कवते शब्दं करोति उपदिशति वा स कविः १मा १व०।

कविम् (३२)—२या १व०।

कस्य (३४)—'कै' शब्दे भ्वा० प० अनि०, कायति, अस्मात् 'कायतेर्डिमिः' उ० ४।१५८। कायति शब्दयतीति किम्, को वा तस्य ६ष्ठी १व०।

केतवः (३१)—'चायृ' पूजानिशामनयोः भ्वा० आ० से० चायते, अस्मात् 'चायः की' उ० १।७४ इति कीभावः धातोः तु प्रत्ययश्च। चायते पूजयति निशामयति श्रावयति वा स केतुस्ते १मा बहु व०।

गायत्रम् (२२)—'गै' शब्दे भ्वा० प० अनि० गायति, शतृप्रत्ययः=गायन्, तं त्रायते, 'त्रैङ्' पालने भ्वा० आ० अनि० त्रायते, अस्मात् 'आतोऽनुपसर्गे कः' ३।२।३ इति कः।

यद्वा गानं गायः, भावे घञ्, युक्। गायेन गानेन त्रायते—कः सुपीति योगविभागात्। २या १व०।

गिरः (३४)—[१द०]

गिरा (२९)—[१द०]

गोपवनः (२९)—'गम्लृ' गतौ भ्वा० प० अनि० गच्छति, अस्मात् 'गमेर्डोः' उ० २।६७ इति डोः, डित्वाट्टिलोपः। गच्छतीति गौः। 'पूञ्' पवने क्र्या० उ० सें० पुनाति पुनीते, अस्मात् 'ल्युट् च' ३।३।११५ इति ल्युट्। 'युवोरनाकौ' ७।१।१ इति योरनादेशः। पुनातीति पवनम्। गोभिः पवनं यस्य स गोपवनः १मा १व०।

गोषाता (३४)—'षण' सम्भक्तौ भ्वा० प० सें० सनति, 'षणु' दाने त० उ० सें० सनोति, सनुते, आभ्यां क्तिन्। जन सन खनां सञ् झलोः' ६।४।४२ एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च॥ यद्वा 'ऊति यूति०' ३।३।९७ इति 'षो' अन्तकर्म्मणि दि० प० अनि० स्यति, अस्मात् क्तिनि 'द्यति स्यति०' ७।४।४० इतीत्वे प्राप्ते इत्वाभावो निपात्यते। गवां सातिः=गोसातिः=गोषातिः 'पूर्वपदात्' ८।३।१०३ पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा, तस्यां गोषातौ इति भूते 'सुपां सुलुक्०' ७।१।३९ इति डा।

जनम् (२३)—२या १व०।

जनिष्टत् (२९)—जनधातोः लुङि 'अजनिष्ट' स्थाने अडभावो वर्णव्यत्ययश्च।

जातवेदसम् (३१)—जन+क्तः=जातं वेत्ति, विन्दति, जातेषु प्राणिषु विद्यते वा जातवेदास्तम्। जातो वेदो धनं यस्य वा [विश्ववेदवत् १द० ]

जिन्वति (२७)—'जिवि' प्रीणनार्थः भ्वा० प० सें०। इदित्वान्नुम् लट्, तिप्।

जिन्वसि (३४)—लटः मध्यम पु० १व० सिप्।

णः (२४)—[नः १द०] 'नश्च धातुस्थो रुषुभ्यः' ८।४।२७ इति णत्वम्।

तव (२५)—६ष्ठी १व०।

तपिष्ठैः (२४)—'तप' सन्तापे भ्वा० प० अनि० तपति, ऐश्वर्ये वा दि० आ० अनि० तप्यते, आभ्यामिष्ठन् 'अतिशायने तमबिष्ठनौ' ५।३।५५ इति। अतिशयेन तपति तप्यते वा तपिष्ठस्तैः ३या बहुव०।

तिग्मेन (२२)—'तिज' निशाने भ्वा० आ० सें० तितिक्षते, चु० प० सें० तेजयति, आभ्यां 'युजिरुजितिजा०' उ० १।१४६ इति मक् कवर्गश्च, तिग्मं तेन ३या १व०।

ते (३४)—[१द०]

त्वम् (३१)—[१द०]

त्वम् (२८)—[१द०]

त्वा (२६, २९)—[२द०]

दधत् (३०)—धा धातोः [अधि १८०] शतः। यद्वा 'घोर्लोपो लेटि वा' ७।३।७० धा+लेट्+तिप्=धा+त् ('इतश्चलोपः परस्मैपदेषु' ३।४।९७ लेटस्तिङामितो लोपो वा स्यात् परस्मैपदेषु ति—त्), शप् ('व्यत्ययो बहुलम्' ३।१।८५), श्लु, 'द्वित्वम्, अट् (लेटोऽडाटौ' ३।४।९४ लेटः अट् अट् एतौ आगमौ स्तः, तौ च पितौ), आलोपः।

दाशुषे (३०)—'दाश्' दाने भ्वा० उ० से० दाशति, ते. अस्मात् 'दाश्वान् सह्वान्०' ६।१।१२ एते क्वसन्ता निपात्यन्ते। ४र्थी० १व०।

दिवः (२७)—६ष्ठी १व०।

देव (२४)—[२८०]

देवयुम् (२३)—देव+या प्रापणे+कुः 'मृगय्वादयश्च' उ० १।३७ इति। देवान् विदुषो याति स तम् २या १व०।

देवम् (३०, ३२)—२या १व०।

देवीः (३३)—स्त्रियाम् २या बहु व० व्यत्ययेन प्रथमास्थाने।

देवेषु (२८)—७मी बहु व०।

द्युमन्तम् (२६)—'द्यु' अभिगमने अ० प० अनि० द्यौति, +मतुप्, तम् २या १व०।

दृशे (३१)—[१८०]

धियः (३४)—धीशब्दस्य २या बहु व०।

नः (२२, २३, २३)—[१८०]

नव्य (२६)—'णच' गतौ भ्वा० प० से० नचति, +यत्। सं० १व०।

नप्त्रे (२१)—न+'पत' पतने+तृच् 'नप्तृनेष्टृ०' उ० २।९५ इति साधुः। नञः प्रकृतिभावः पतेरच्छब्दलोपश्च निपातनात्। व्यत्ययेन द्वितीयार्थे चतुर्थी।

नव्यांसम् (२८)—'णु' स्तुतौ अ० प० से० नौति, अस्मात् 'ऋदोरप्' ३।३।५७ ऋवर्णान्तादुवर्णान्तादप्। नवशब्दादीयसुनि ईकारलोपः छान्दसः। २या १व०।

निधीमहे (२६)—नि+दधीमहि ('धा' लिङ् आ०) व्यत्ययेन दलोप एकारश्च।

नियंसत् (२२)—नि+'यम' उपरमे भ्वा० प० अनि० यच्छति, लेटि सिबागमः।

पतिः (२७)—पा रक्षणे धातोः 'पातेर्डतिः' उ० ४।५७ इति डतिः। पाति रक्षतीति पतिः १मा १व०।

परीणसि (३४)—परि+'णस' कौटिल्ये भ्वा० आ० से० नसते, +क्विप्। व्यत्ययेन २या स्थाने ७मी।

पर्य्यक्रमीत् (३१)—परिपूर्व्वात् 'क्रमु' पादविक्षेपे भ्वा० प० से० क्रामति, धातोः लुङि प्रथम पु० १व०।

पावक (२९)—पूञ्धातोः [गोपवनः] 'ण्वुल्तृचौ' ३।१।१३३ इति ण्वुल्। 'युवोरनाकौ' ७।१।१ इत्यकः णिलादवृद्धिः। सं० १व०।

पीतये (३३)—'पा' पाने धातोः [गोपीथाय २द०] 'स्थागापापचोभावे' ३।३।२५ इति क्तिन्। 'घुमास्था०' ६।४।६६ इतीत्वम्। पीतिस्तस्यै ४र्थी १व०।

पुरुतमम् (२१)—'पॄ' धातोः [परमात् १द०] 'पॄ भिदि०' उ० १।२३ इति कुः। पिपर्त्ति पालयति पूरयति वा स पुरुः। 'अतिशायने तमबिष्ठनौ' ५।३।५५ इति तमप्। व्यत्ययेनोकारस्य दीर्घः। तम् २या १व०।

पृथिव्याः (२७)—प्रथ धातोः [प्रति २द०] 'प्रथेः षिवन्०' उ १।१५० इति। तस्याः ६ष्ठी १व०।

प्रतिदहस्म (२४)—प्रति पूर्वात् 'दह' भस्मीकरणे भ्वा० प० अनि० दहति, धातोः लोटि मध्यम पु० १व०। स्म पादपूरणे 'ष्मिङ्' ईषद्धसने भ्वा० आ० अनि० स्मयते, 'अन्येष्वपि०' ३।२।१०१ इति डः। यद्वा षो धातोः [गोषाता] ड प्रत्ययः। अव्ययम्।

प्रवोचः (२८)—प्र+'वच' परिभाषणे अ० प० अनि० वक्ति, +लुङ् (अवोचः)—व्यत्ययेन पररूपत्वे सवर्णदीर्घाभावः।

बर्हिः (२३)—[बर्हिषि १द०] २या १व०।

वहन्ति (२५, ३१)—'वह' प्रापणे भ्वा० उ० अनि० वहति, ते, लटि प्रथम पु० बहुव०।

भवन्तु (३३)—'भू' सत्तायाम् भ्वा० प० से०, लोटः प्रथम पु० १व०।

महान् (२३)—महधातोः [महे १द०] 'वर्त्तमाने०' उ० २।८४ एते निपात्यन्ते शतृवच्चैषां कार्य्यं स्यात्, उगित्वान्नुम्। 'सान्तमहतः०' ६।४।१० इति दीर्घः। मह्यते पूज्यते इति महान् १मा १व०।

मूर्द्धा (२७)—[मूर्द्धः १द०] १मा १व०।

मृड़ (२३)—'मृड़' सुखने तु० प० से० लोटः मध्यम पु० १व०।

यस्य (३४)—यच्छब्दस्य [२६] पुंसि ६ष्ठी १व०।

युङ्क्ष्वा (२५) 'युजिर्' योगे रु० उ० अनि० युनक्ति, युङ्क्ते, धातोः लोटः मध्यम पु० १व० 'द्व्यचोऽतस्तिङः' ६।३।१३५ मन्त्रे दीर्घः।

ये (२५)—यच्छब्दस्य पुंसि १मा बहु व०।

रक्षा (२४)—'रक्ष' पालने भ्वा० प० से० लोटि, दीर्घः।

रत्नानि (३०)—रमधातोः [रत्नम् १द०] 'रमेस्त च' उ० ३।१४ ण्यन्ताद्रमेर्नप्रत्ययो मस्य तश्चादेशः। रमयति हर्षयतीति रत्नं तानि २या बहु व०।

रयिम् (२२)—रीधातोः [रेतसः २द०] 'अच इः' उ० ४।१३९ इति इः, रिणाति गच्छति जनाज्जनमिति रयिर्धनं तम् २या १व०।

रेतांसि (२७)—[रेतसः २द०] २या बहु व०।

वः (२१)—युष्मच्छब्दस्य [ते १द०] २या बहु व० व्यत्ययेन, यूयमित्यत्र।

वयम् (२६)—[२द०]।

वाज़पतिः (३०)—'वज' गतौ भ्वा० प० से० अस्मात् 'अकर्त्तरि च कारके संज्ञायाम्' ३।३।१९

कर्तृभिन्ने कारके घञ् स्यात्। 'चजोः कुघिण्यतोः' ७।३।५२ चस्य जस्य च कुत्वं स्यात् घिति ण्यति च प्रत्यये परे, इति कुत्वे प्राप्ते 'अजिव्रज्योश्च' ७।३।६० न कुत्वम्। 'चकारस्यानुक्तसमुच्चयार्थत्वाद् वजेरपिकुत्वप्रतिषेधः सिद्धो भवति' इति न्यासकारः। वज्यते निगम्यते सर्वैरिति वाजोऽन्नम्। वाजानां पतिः वाजपतिः १मा १व०।

विश्पते (२६)—विशां [ विशि २द० ] प्रजानां पतिः विश्पतिस्तस्य सं० १व०।

विश्वम् (२२)—[ विश्ववेदसम् १द० ] पुंसि २या १व०।

विश्वाय (३१)—व्यत्ययेन असर्वनामता। ४र्थी १व०।

वृधन्तम् (२१)—वृधु [ वर्द्धसि १द० ] धातोर्व्यत्ययेन शतृः, तं २या १व०।

वंसते (२२)—'वन' सम्भक्तौ भ्वा० प० अनि० वनते, लेटि सिवागमः।

शम् (३३)—'शमु' उपशमे दि० प० से० शाम्यति, धातोर्विन्, निपातनाद्वा। अव्ययम्।

शंयोः (३३)—शाम्यतेः 'कंशंभ्यां वभयुस्तितुतयसः' ५।२।१३८ इति युस्, तयोः। यद्वा शंयोरेवाव्ययम्।

शोचिषा (२२)—शुच् धातोः [शुक्रः १द०] 'अर्चिशुचि०' उ० २।१०८ इति इसिः शोचिस्तेन ३या १व०।

श्रुधी (२९)—'श्रु' श्रवणे भ्वा० प० अनि०, अस्य लोटो मध्यमैकवचने श्नु 'छन्दस्युभयथा' ३।४।११७ इत्युभयसंज्ञावत्त्वादार्धधातुकं ततो न श्न न च श्नुः। ततः 'श्रु शृणु पृकृ०' ६।४।१०२ इति हेर्धिः। 'अन्येषामपि०' ६।३।१३७ इति दीर्घः।

षु (२८)—[षु ब्रवाणि १द०]।

सः (२९)—तच्छब्दस्य [२द०] 'तदोः स सावनन्त्ययोः' ७।२।१०६ इति सः, १मा १व०।

सत्पते (३४)—'अस' भुवि धातोः [असि १द०] लटः शत्रादेशः, 'श्नसोरल्लोपः' ६।४।१११ अस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति, सत्तेषां पतिस्तस्य सं० १व०।

सनिम् (२८)—षणु दाने [ गोषाता ] धातोः 'खनिकष्य०' उ० ४।१४० इति इन्। सनोति ददातीति सनिस्तम् २या १व०।

सहस्वते (२१)—'षह' मर्षणे भ्वा० आ० से० सहते, धातोः 'सर्वधातुभ्योऽसुन्' उ० ४।१८९ इत्यसुन्। सहते मर्षयतीति सहो बलम्। ततः 'तदस्यास्त्यस्मिन्निति०' ५।२।९४ इति मतुप्। 'मादुपधायाः०' ८।२।९ इति मस्य वः। सहस्वान्तस्मै ४र्थी १व० व्यत्ययेन द्वितीयास्थाने।

साधवः (२५)—'साध' संसिद्धौ स्वा० प० से० साध्नोति, धातोः 'कृवापा०' उ० १।१ इति उः। १मा बहु०।

सुवीरम् (१६)—सुपूर्वात् 'वीर' विक्रान्तौ चु० आ० वीरयते, धातोः कः। यद्वा 'अज' गतिक्षेपणयोः भ्वा० प० से० अजति, धातोः वी आदेशः, रक् प्रत्ययश्च 'स्फायितञ्चि०'

उ० २।१३ इति। अजति गच्छति शत्रून् प्रति स वीरः। सु—वीरः सुवीरः तं २या १व०।

सूर्य्यम् (३१)—'सृ' गतौ भ्वा० प० अनि० सरति, 'षु' प्रेरणे तु० प० से० सुवति, आभ्यां 'राजसूय सूर्य्य०' ३।१।११४ इति क्यबन्तो निपातः। सरति, सुवति वा सूर्य्यस्तम् २या १व०।

सत्यधर्म्माणम् (३२)—'अस' भुवि+शतृ+यत्। 'धृङ्' अवस्थाने तु० आ० अनि० ध्रियते, धातोः 'अर्त्तिं स्तुसुहृसृधृ०' उ० १।१४० इति मनिन्। ध्रियते सुखप्राप्तये सेव्यते स धर्म्मः। सत्यो धर्म्मो यस्य 'धर्म्मादनिच् केवलात्' ५।४।१२४ इत्यनिच् समासान्तः, तम् २या १व०।

हवम् (२९)—जुहोतेः [आहुतः १द०] ह्वयतेर्वा [आहुवे २द०] अप्। २या १व०।

हव्यानि (३०)—हव्यशब्दस्य [हव्यदातये १द] २या बहु०।

हि (२५)—[१द०]।

इति तृतीयदशतिः तृतीयखण्डश्च।

---

प्रथमम् (आग्नेयं) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। चतुर्थः खण्डः। चतुर्थी दशतिः।

## अथ प्रथमा।

यज्ञा यज्ञा वो इत्यृचो बार्हस्पत्यस्तृणपाणिः शंयु ऋषिः। चत्वारि सामानि, द्वे सामनी भरद्वाजस्य सम्बन्धिनी उपहवौ एतन्नामके, तृतीयं साम श्रौष्टीगवं श्रुष्टिगुर्नाम ऋषिः, चतुर्थं साम वैश्वानराख्यस्याग्नेः स्वभूतं यज्ञायज्ञीयं, भरद्वाजस्य ऋषेः सम्बन्धि वा (भरद्वाजस्योपहवौ द्वौ श्रौष्टीगवं तृतीयमग्ने वैश्वानरस्य यज्ञायज्ञीयं भरद्वाजस्य वा। आ० ब्रा०) बृहती छन्दः (बृहती जागतस्त्रयश्च गायत्राः। पि० छ० सू०,

अध्या० ३। सू० २६ ) (क) अग्नि र्देवता। ( यज्ञा यज्ञा वो अग्नय इत्यग्निर्वै यज्ञो यज्ञ एव तद्यज्ञं प्रतिष्ठापयति॥ ता० म० ब्रा० १.१।५।२ ) यज्ञे यज्ञे संस्तुतेऽग्नौ यज्ञस्य प्रतिष्ठायां विनियोगः।

३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ २
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्र वय-
३ १ २ ३ १ २ ३ २ ३ १र २र
मम्‍तं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥३५॥ (ख)

**पदपाठः।** यज्ञा यज्ञा ७। वः २। अग्नये ४। गिरा गिरा ३। च अ०। दक्षसे ४। प्र प्र अ०। वयम् १। अमृतम् २। जातवेदसम् २। प्रियम् २। मित्रम् २। न अ०। शंसिषम् क्रि०।

**अन्वयः।** [हे स्तोतारः] वः (=यूयं) यज्ञा यज्ञा दक्षसे अग्नये गिरा गिरा [स्तोत्रं कुरुत], वयं च अमृतं जातवेदसं मित्रं न प्रियं [तं] प्र प्र शंसिषम्।

**आधियाज्ञिकम्।** हे स्तोतारः! 'वः' यूयं, विभक्तिव्यत्ययः 'यज्ञा यज्ञा' प्रति यज्ञं 'दक्षसे' समर्थाय 'अग्नये' 'गिरा गिरा' स्तुतिरूपाभिः सर्व्वाभि र्वाग्भिः स्तोत्रं कुरुत। 'वयम्' ऋत्विजः 'च' अपि 'अमृतम्' अविनाशिनं 'जातवेदसं' जातधनं 'मित्रं न प्रियं' बन्धुमिवानुकूलं तं 'प्रप्रशंसिषम्' प्रशंसामः।

**आध्यात्मिकम्।** हे स्तोतारः! 'वः' यूयं 'यज्ञा यज्ञा प्रतियज्ञं 'दक्षसे' समर्थाय, महते 'अग्नये' परमात्मने 'गिरा गिरा' स्तुतिभिः पूजयत। 'वयम्' उपासकाः 'च' अपि 'अमृतम्' अविनाशिनं 'जातवेदसं' जातधनं, जातप्रज्ञं वा 'मित्रं न प्रियं' बन्धुवदनुकूलं तं 'प्रप्रशंसिषम्' प्रशंसामः।

---

(क) यदा एको जागतः ( द्वादशाक्षरः ) पादः, त्रयश्च गायत्राः ( अष्टाक्षराः ), तदा बृहती नाम छन्दो भवति।

(ख) ऋ० अष्ट० ४। अध्या० ८। व० १। एवं विधः पाठः॥

**निरुक्तम्।** दत्ततिरुत्साहकर्म्मणः ॥ १।७।१ ॥ दत्तो बलनाम ॥ ३।८।७ ॥ शंसतिः अर्च्चतिकर्म्मा ॥ ३।१८।१ ॥ अमृतेऽ-मरणधर्म्माणी ॥ २।२०।१ ॥

## अथ द्वितीया।

पाहि नो अग्न इत्यृचः प्रगाथपुत्रो भर्ग ऋषिः। साम त्रयं, कार्त्तयशं नामकं, कार्त्तवेशनामकं वा, द्वितीयं नार्म्मेधं नृमेधो नाम ऋषिस्तत्संबन्धि, तृतीयं साम कार्त्तवेशनामकमेव (कार्त्तयशं च कार्त्तवेशं वा नार्मेधं च कार्त्तवेशं चैव। आ० ब्रा०) बृहती। अग्निः।

२ १ २ ३ ३ १ २ ३ २ २ ३ १ २ ३ २
**पाहि नो अग्न एकया पाह्यू३त द्वितीयया। पाहि**
३ २ ३ १ २ ३ १ २ ३ १ २
**गीर्भिस्तिसृभि रूर्जाम्पते पाहि चतसृभिर्वसो ॥३६॥ (क)**

**पदपाठः।** पाहि क्रि०। नः २। अग्ने सं०। एकया ३। पाहि क्रि०। उत अ०। द्वितीयया ३। पाहि क्रि०। गीर्भिः ३। तिसृभिः ३। ऊर्जाम्पते सं०। पाहि क्रि०। चतसृभिः ३। वसो सं०।

**अन्वयः।** [हे] ऊर्जाम्पते वसो अग्ने! एकया [अभिष्टुतः सन्] नः पाहि, उत द्वितीयया [अभिष्टुतः सन्] पाहि, तिसृभिः गीर्भिः [अभिष्टुतः सन्] पाहि, चतसृभिः [अभिष्टुतः सन्] पाहि [च]।

**आधियाज्ञिकम्।** हे 'ऊर्ज्जाम्पते अन्नपते 'वसो' धनप्रद 'अग्ने'! 'एकया' ऋग्वेदलक्षणया गिरा अभिष्टुतः सन् 'नः' अस्मान् 'पाहि' रक्ष, 'उत' अपि च 'द्वितीयया' यजुर्वेदलक्षणया गिरा अभिष्टुतः सन् 'पाहि' रक्ष, 'तिसृभिः' ऋग्यजुस्सामलक्षणाभिः 'गीर्भिः'

(क) ऋ० ६।४।२२ ॥

वाग्भिः अभिष्टुतः सन् 'पाहि' रक्ष, 'चतसृभिः' ऋग्यजुस्सामाथर्व-लक्षणाभि र्गीर्भिः अभिष्टुतः सन् 'पाहि' रक्ष च।

**आध्यात्मिकम्।** हे 'ऊर्ज्जाम्पते' अन्नपते 'वसो' जगन्निवास अन्तर्यामिन् 'अग्ने' परमात्मन्! 'एकया' ऋग्वेदलक्षणया गिरा अभिष्टुतः सन् 'नः' अस्मान् 'पाहि' रक्ष; 'उत' अपि च 'द्वितीयया' यजुर्वेदलक्षणया गिरा अभिष्टुतः सन् 'पाहि' रक्ष; 'तिसृभिः' ऋग्यजुस्सामलक्षणाभिः 'गीर्भिः' वाग्भिः अभिष्टुतः सन् 'पाहि' रक्ष; 'चतसृभिः' ऋग्यजुस्सामाथर्वलक्षणाभिर्गीर्भिः अभिष्टुतः सन् 'पाहि' रक्ष च। यद्वा योगिमते, 'एकया' ताल्वादिस्थानैरुच्चार्य्य-माणया श्रोत्रविषयया वैखरी संज्ञया 'द्वितीयया' हृद्देशस्थया वैखरी-मूलयाऽव्यक्तया मध्यमासंज्ञया 'तिसृभिः' वैखरीमध्यमापश्यन्तीभिः 'चतसृभिः' वैखरीमध्यमापश्यन्तीपराभिः अभिष्टुतः सन् पाहीति।

चतुर्विधा हि गिरो भवन्तिः—वैखरी, मध्यमा, पश्यन्ती, परेति। तत्र श्रोत्रविषया वैखरी मनुष्यमात्रैरुपयुज्यमाना। तस्या मूलं व्यवह्रियमाणाया वाचः कारणं हृद्देशस्थाऽव्यक्ता मध्यमा। लोक-व्यवहारातीता समाधावुपयुज्यमाना उच्चारणासमर्थस्यापि निसर्ग-ज्ञानाधारभूता नित्या पश्यन्ती। परा तु यस्या 'मनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं' विद्यते। तया एव परया गिरा कल्पादौ परमात्मा ब्रह्माणं वेदमुपादिशत्स 'पूर्वेषामपि गुरुः कालेनानवच्छेदात्' योगदर्शने पा० १।२६ इति वचनात्।

**निरुक्तम्।** ऊर्गिति अन्ननाम॥ २।७।४॥ वसु धन-नामसु॥ २।१०।१०॥

## अथ तृतीया।

बृहद्भिरग्ने इत्यृचो बार्हस्पत्यस्तृणपाणिः शंयुः। द्वे सामनी भरद्वाजस्य पृश्निनी एतन्नामके (भरद्वाजस्य पृश्निनी द्वे। आ० ब्रा०) बृहती। अग्निः।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा। भरद्वाजे
३ १ २ ३ १ २
समिधानो यविष्ठ रेवत्पावक दीदिहि॥ ३७॥ (क)

**पदपाठः।** बृहद्भिः ३। अग्ने सं०। अर्चिभिः ३। शुक्रेण ३। देव सं०। शोचिषा ३। भरद्वाजे ७। समिधानः १। यविष्ठ सं०। रेवत् १। पावक सं०। दीदिहि क्रि०।

**अन्वयः।** [हे] देव यविष्ठ पावक अग्ने! [त्वं] शुक्रेण शोचिषा भरद्वाजे समिधानः बृहद्भिः अर्चिभिः रेवत् यथा स भवति तथा दीदिहि।

**आधियाज्ञिकम्।** हे 'देव' द्योतमान 'यविष्ठ' अतिशयेन महन् 'पावक' शोधक 'अग्ने'! त्वं स्वकीयेन 'शुक्रेण' शुद्धेन 'शोचिषा' तेजसा 'भरद्वाजे' अन्नस्य धातरि यजमाने 'समिधानः' समिध्यमानः 'बृहद्भिः' महद्भिः 'अर्चिभिः' प्रकाशगुणैः 'रेवत्' प्रशस्तैश्वर्यधनो यथा स भवति तथा 'दीदिहि' दीप्यस्व, तस्मै जनाय धनं देहीति।

**आध्यात्मिकम्।** हे 'देव' दिव्यगुणयुत 'यविष्ठ' अतिशयेन महन् 'पावक' पवित्रकर्त्तः 'अग्ने' परमात्मन्! त्वं स्वकीयेन 'शुक्रेण' शुद्धेन 'शोचिषा' तेजसा 'भरद्वाजे' विज्ञानादिधारके पुरुषार्थिनि जने 'समिधानः' देदीप्यमानः 'बृहद्भिः' महद्भिः 'अर्चिभिः' प्रकाशगुणैः 'रेवत्' प्रशस्तैश्वर्यविद्याविनयधनो यथा स भवति तथा 'दीदिहि' दीप्यस्व, तथाविधं ज्ञानधनं तस्मै पुरुषार्थिने जनाय देहीति।

**निरुक्तम्।** बृहदिति महतो नामधेयम्॥ १।७।१॥ अर्चिरिति ज्वलतो नाम॥ २।२८।४॥ शोचिरिति ज्वलतो नाम॥ २।२८।४॥ दीदयतीति ज्वलतिकर्म्मसु॥ २।२८।३॥

---

(क) ऋ० ४।८।२॥

## अथ चतुर्थी ।

त्वे अग्ने स्वाहुत इत्यृचो मैत्रावरुणो वसिष्ठ ऋषिः। एकम् अङ्गिरसः पुत्रस्य उरोः साम ( उरोराङ्गिरसस्य साम। आ० ब्रा० ) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे ।

१ २ ३ १ २ ३ १ २ ३ २ ३ २
त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः। यन्तारो ये
३ १ २ ३ १ २ ३ १र २र ३ १ २
मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ३८ ॥ (क)

**पदपाठः**। त्वे ६। अग्ने सं०। स्वाहुत सं०। प्रियासः १। सन्तु क्रि०। सूरयः १। यन्तारः १। ये १। मघवानः १। जनानाम् ६। ऊर्वम् ८। दयन्त क्रि०। गोनाम् ६।

**अन्वयः**। [हे] स्वाहुत अग्ने ! त्वे (=तव) सूरयः ये [च] मघवानः जनानां गोनां (=गवां) यन्तारः ऊर्वं [स्तुतीनां] दयन्त [ते] [तव] प्रियासः सन्तु ।

**आधियाज्ञिकम्**। हे 'स्वाहुत' सुष्ठु समन्तात्कृतहोम 'अग्ने' यज्ञदेव! 'त्वे' तव 'सूरयः' स्तोतारः 'ये' च 'मघवानः' धनवन्तः 'जनानाम्' अस्मदीयानां मनुष्याणां 'यन्तारः' नेतारः, राजादयः 'गोनां' गवां वेदवाचां नेतारः, विद्वांसः, मनुष्यान् प्रति वेदोपदेशं कुर्वन्तः, 'ऊर्वं' समूहं स्तुतीनामिति 'दयन्त' प्रयच्छन्ति, स्तुवन्तीत्यर्थः ते तव 'प्रियासः' प्रियाः 'सन्तु'।

**आध्यात्मिकम्**। हे 'स्वाहुत' मनसि योगानुष्ठानेन सम्यग्ध्यात 'अग्ने' यज्ञदेव परमात्मन्! 'त्वे' तव 'सूरयः' स्तोतारः 'ये' च मघवानः' विद्यादिधनवन्तः 'जनानाम्' अस्मदीयानां मनुष्याणां 'यन्तारः' नेतारः, राजादयः 'गोनां' गवां वेदवाचां नेतार-

---

(क) ऋ० ५।२।२२॥

श्चेति, मनुष्यान् प्रति वेदोपदेशं कुर्वन्तो विद्वांसः 'ऊर्वं' समूहं स्तुतीनामिति 'दयन्त' प्रयच्छन्ति, स्तुवन्तीत्यर्थः ते तव 'प्रियासः' प्रियाः 'सन्तु'।

**निरुक्तम्।** सूरिरिति स्तोतृनाम॥ ३।१९।४॥ यन्तारो याञ्चाकर्म्मसु॥ ३।१८।११॥ मघमिति धननामधेयं मंहतेर्दानकर्म्मणः॥ १।७।१॥ दयतिरनेककर्म्मा।...उपदयाकर्म्मा;...दानकर्म्मा वा विभागकर्म्मा वा; ... दहतिकर्म्मा; ... हिंसाकर्म्मा; दयमान (उड्डीयमान) इति॥ ४।१७।२॥

## अथ पञ्चमी।

अग्ने जरितर्विश्पतिरित्यृचो बार्हस्पत्यो भरद्वाज ऋषिः। द्वे सामनी पौरुमद्गे, गोतम ऋषिः, आङ्गिरसः पुरुमद्गो वा (गोतमस्य पौरुमद्गे द्वे पुरुमद्गस्य वाङ्गिरसस्य। आ॰ ब्रा॰) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २

**अग्ने जरित विश्पति स्तपानो देव रक्षसः। अप्रोषिवान्**

३ १ २ ३ २ ३ १ २ ३ २

**गृहपते महाँ३ असि दिवस्पायु र्दुरोणयुः॥३९॥ (क)**

**पदपाठः।** अग्ने सं॰। जरितः सं॰ विश्पतिः १। तपानः १। देव सं॰। रक्षसः ६। अप्रोषिवान् १। गृहपते सं॰। महान् १। असि क्रि॰। दिवः ६। पायुः १। दुरोणयुः १।

**अन्वयः।** [हे] जरितः अग्ने! [त्वं] विश्पतिः, [हे] देव! [त्वं] रक्षसः तपानः [च], [हे] गृहपते! [त्वम्] अप्रोषिवान् महान् असि, दिवः पायुः दुरोणयुः [च] [असि]।

**आधियाज्ञिकम्।** हे 'जरितः' स्तोतः स्तुत्य! 'अग्ने' त्वं विश्पतिः विशां प्रजानां पतिः पालकः, हे 'देव' प्रकाशमान!

(क) ऋ॰ ६।४।३५। 'गृहपते' इत्यत्र 'गृहपतिः' पाठः।

त्वं 'रक्षसः' दुष्टस्य 'तपानः' सन्तापकः च, हे 'गृहपते' गार्हपत्याग्ने! त्वम् 'अप्रोषिवान्' यजमानगृहमत्यजन् 'महान्' 'असि', 'दिवः' द्युलोकस्य 'पायुः' पाता रक्षिता 'दुरोणयुः' दुरोणं गृहं यौति मिश्रयति स सदाग्न्यागारे स्थापितश्चासि।

**आध्यात्मिकम्।** हे 'जरितः' स्तुत्य 'अग्ने' परमात्मन्! त्वं 'विश्पतिः' प्रजापालकः, हे 'देव' दिव्यगुणोपेत! त्वं 'रक्षसः' दुष्टस्य 'तपानः' सन्तापकः च, हे 'गृहपते' गृहस्थानां पालक! त्वम् 'अप्रोषिवान्' गृहमत्यजन् भक्तहृदि सदा निवसन् 'महान्' महत्त्वयुक्तः 'असि,' 'दिवः' द्युलोकस्य 'पायुः' पाता रक्षिता 'दुरोणयुः' गृहे हृदयकन्दरे उपासकानामिति सदा वर्त्तमानश्चासि।

**निरुक्तम्।** जरिता स्तोतृनाम॥ ३।१९।४॥ रक्षो रक्षितव्यमस्मात्। रहसि क्षणोतीति वा॥ रात्रौ नक्षत इति वा॥ ४।१८।३॥ दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः॥ ४।५।१॥

## अथ षष्ठी।

अग्ने विवस्वदुषस इत्यृचः काण्वः प्रस्कण्व ऋषिः। द्वे सामनी माण्डवे जमदग्निगोत्रस्य मण्डोः एतन्नामकऋषेः मण्डो र्वा (मण्डोर्जामदग्न्यस्य सामनी द्वे माण्डवे वा। आ० ब्रा०) बृहती। अग्निः। (अग्ने विवस्वदुषस इति सन्धिना स्तुयुः प्राणा वै त्रिवृत् स्तोमानां प्रतिष्ठा रथन्तरꣳसाम्नां प्राणाꣳश्चैवोपयन्ति प्रतिष्ठाञ्च॥ ता० म० ब्रा० ९।३।४) नवस्तोत्रीयात्मकसन्धिस्तोत्रेण स्तोतुं मध्ये व्युष्टिः स्यादिति शङ्का यद्युदियात्तदाऽग्ने विवस्वदुषस इति प्रगाथेऽग्निदेवत्ये सन्धिना स्तोत्रेण त्रिवृत् स्तोमेन स्तुयुः।

२ ३ १ २ ३ १ २ ३ १र २र २ ३ १ २
अग्ने विवस्वदुषस श्चित्रꣳ राधो अमर्त्य। आ दाशुषे
३ २ ३ २ ३ १ २ ३ १ २
जातवेदो वहा त्वमद्या देवाꣳ उषर्बुधः॥ ४०॥ (क)

(क) ऋ०, १।३।२८॥

**पदपाठः।** अग्ने सं०। विवस्वत् २। उषसः ६। चित्रम् २। राधः २। अमर्त्य सं०। आ अ०। दाशुषे ४। जातवेदः सं०। वहा क्रि०। त्वम् १। अद्या अ०। देवान् २। उषर्बुधः २।

**अन्वयः।** [हे] अमर्त्य जातवेदः अग्ने! त्वम् उषसः विवस्वत् चित्रं राधः आवह, दाशुषे अद्या उषर्बुधः देवान् आ वह [च]।

**आधियाज्ञिकम्।** हे 'अमर्त्य' अविनाशिन् 'जातवेदः' जातधन 'अग्ने' सूर्य्यात्मन् अग्ने! 'त्वम्' 'उषसः' प्रातः कालस्य 'विवस्वत्' प्रकाशकं, तमोनाशकं 'चित्रम्' अद्भुतं 'राधः' धनं, तेजोरूपम् 'आवह' प्रापय; 'दाशुषे' हविर्दत्तवते 'अद्या' अस्मिन्दिने 'उषर्बुधः' प्रातः प्रबुद्धान् 'देवान्' ज्ञानकर्म्मेन्द्रियाणीति आवह, तत्तत्कर्म्म-करणाय प्रापय, तानि सत्कर्म्मणि योजय इति।

**आध्यात्मिकम्।** हे 'अमर्त्य' अविनाशिन् 'जातवेदः' सर्वधन, प्राणिनां वेदितः 'अग्ने' प्रकाशक परमात्मन्! 'त्वम्' 'उषसः' प्रातःकालस्य 'विवस्वत्' प्रकाशकं 'चित्रम्' अद्भुतं 'राधः' धनं, सूर्य्यज्योतीरूपं, ब्राह्ममुहूर्त्ते उपासनाजनितं ज्ञानरूपं धनं वा [ब्राह्मे-मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत्। कायक्लेशांश्च तन्मूलान् वेद-तत्त्वार्थमेव च॥ मनुः अ० ४।९२] 'आवह' प्रापय। 'दाशुषे' सर्वस्य दात्रे पुरुषार्थिने उपासकाय 'उषर्बुधः' प्रातः प्रबुद्धान् 'देवान्' दिव्यगुणान्, ज्ञानकर्म्मेन्द्रियाणि वा आवह च, तत्तत्कर्म्मकरणाय प्रापय च, तानि सत्कर्म्मणि योजयेति।

**निरुक्तम्।** उषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालः॥ २।१८।४॥ चित्रं चायनीयं मंहनीयम्॥ ४।४।१॥ राध इति धननाम राध्नुवन्त्यनेन॥ ४।४।१॥

## अथ सप्तमी।

त्वन्नश्चित्र इत्यृचो बार्हस्पत्यस्तृणपाणिः शंयु ऋर्षिः। गाथं साम भरद्वाजऋर्षिः (भरद्वाजस्य गाथम्। आ० ब्रा०)। बृहती। अग्निः।

१ २ ३ २ ३ २उ ३ १ २ ३ २
त्वन्न श्चित्र ऊत्या वसो राधाꣳसि चोदय। अस्य
३ १र ३ २र ३ १ २ ३ २ ३ २ ३ १र २र
रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः॥४१॥ (क)

**पदपाठः**। त्वम् १। नः ४। चित्रः १। ऊत्या ३। वसो सं०। राधांसि २। चोदय क्रि०। अस्य ६। रायः ६। त्वम् १। अग्ने सं०। रथीः १। असि क्रि०। विदाः क्रि०। गाधम् २। तुचे ४। तु अ०। नः ६।

**अन्वयः**। [हे] वसो अग्ने! चित्रः त्वम् ऊत्या [सह] नः राधांसि चोदय, अस्य रायः त्वम् रथीः असि, [त्वञ्च] नः तुचे गाधं तु (=क्षिप्रं) विदाः।

**आधियाज्ञिकम्**। हे 'वसो' धनदातः 'अग्ने'! 'चित्रः' चायनीयः, पूजनीयः 'त्वम्' 'ऊत्या' रक्षया सह 'नः' अस्मभ्यं 'राधांसि' धनानि 'चोदय' प्रेरय, 'अस्य' लोके परिदृश्यमानस्य 'रायः' धनस्य 'त्वं' 'रथीः' प्रशंसितो नेता, दाता, प्रापको वा 'असि' भवसि ; त्वञ्च 'नः' अस्माकं 'तुचे' अपत्याय, अपतनाय, समृद्धये इति 'गाधं' प्रतिष्ठाम्, आत्मनः स्थैर्य्यं 'तु' क्षिप्रं 'विदाः' लम्भय, देहि।

**आध्यात्मिकम्**। हे 'वसो' वासयितः, सर्वाधारभूत 'अग्ने' परमात्मन्! 'चित्रः' चायनीयः, पूजनीयः 'त्वम्' 'ऊत्या' रक्षया सह 'नः' अस्मभ्यं 'राधांसि' शुभकर्म्मफलरूपाणि कल्याणधनानि 'चोदय' प्रेरय ; 'अस्य' लोके परिदृश्यमानस्य 'रायः' धनस्य, लोकमङ्गलस्य 'त्वं' 'रथीः' प्रशंसितो नेता, दाता, प्रापको वा 'असि' ; त्वञ्च 'नः' अस्माकं 'तुचे' अपत्याय, अपतनाय, समृद्धये इति 'गाधं' प्रतिष्ठाम्, आत्मनः स्थैर्यं 'तु' क्षिप्रं 'विदाः' लम्भय, प्रापय।

**निरुक्तम्**। रायो धननामसु॥ २।१।९॥ तुगित्यपत्यनाम॥ २।१।२॥

---

(क) ऋ० ४।८।२॥

## अथाष्टमी ।

त्वमित्सप्रथा इत्यृचः प्रगाथपुत्रो भर्ग ऋषिः। सामद्वयं गोतमं नाम, गोतमऋषिः (गौतमे द्वे। आ० ब्रा०) बृहती। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

२उ ३ १ २ ३ १ २ ३ २ ३ २ १र २र
**त्वमित्सप्रथा अस्यग्ने त्रात ऋतः कविः। त्वां विप्रासः**
३ १ २ ३ १ २
**समिधान दीदिव आविवासन्ति वेधसः ॥ ४२ ॥ (क)**

**पदपाठः**। त्वम् १। इत् अ०। सप्रथाः १। असि क्रि०। अग्ने सं०। त्रातः सं०। ऋतः १। कविः १। त्वाम् २। विप्रासः १। समिधान सं०। दीदिव सं०। आ विवासन्ति क्रि०। वेधसः १।

**अन्वयः**। [हे] त्रातः अग्ने! त्वं सप्रथाः ऋतः कविः असि; [हे] समिधान! दीदिव! विप्रासः वेधसः त्वाम् इत् (=एव) आ विवासन्ति।

**आधियाज्ञिकम्**। हे 'त्रातः' रक्षक 'अग्ने'! 'त्वं' 'सप्रथाः' सर्वत्र पृथुः, विस्तृतः 'ऋतः' सत्यभूतः 'कविः' वाग्रूपेण उच्चारयिता 'असि'; हे 'समिधान' सम्यग्दीप्यमान! 'दीदिव' प्रकाशरूप! 'विप्रासः' विप्राः मेधाविनः 'वेधसः' विधिवेत्तारः 'त्वाम्' 'इत्' एव 'आ विवासन्ति' सर्वतः परिचरन्ति।

**आध्यात्मिकम्**। हे 'त्रातः' रक्षक 'अग्ने' परमात्मन्! 'त्वं' 'सप्रथाः' सर्वत्र विस्तृतः 'ऋतः' सत्यभूतः यज्ञरूपो वा 'कविः' क्रान्तदर्शी 'असि'; हे 'समिधान' स्वीयविभूतिभिः सम्यग्देदीप्यमान! 'दीदिव' तेजस्विन्! 'विप्रासः' मेधाविनः 'वेधसः' विधिवेत्तारः 'त्वाम्' 'इत्' एव 'आविवासन्ति' सर्वतः परिचरन्ति।

(क) ऋ०, ६।४।३२॥

**निरुक्तम्।** सप्रथा: सर्वत: पृथु: ॥ ६।७।१२ ॥ ऋतं सत्यं वा यज्ञं वा ॥ ४।१६।८ ॥ विप्रास: मेधाविन: ॥ १०।१६।१ ॥ विवासतीति परिचरणकर्म्मा ॥३।१३।१०॥ वेधा इति मेधाविनाम ॥३।१६।२॥

## अथ नवमी ।

आ नो अग्ने इत्यृच: प्रगाथपुत्रो भर्गऋषि:। (अग्नेरायु:। आ० ब्रा० ) एकमायु: साम, ऋषिस्त्वाग्नि:। बृहती। अग्नि:। ( अथैष आयु: ॥ आयुषा वै देवा असुरानायुवतायुते भ्रातृव्यं य एवं वेद ॥ स्वर्गकामो यजेत ॥ ता० म० ब्रा० १६।३।१, २, ३ ) आयुराख्ये सोमयागे विनियोग:।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २
**आ नो अग्ने वयोवृधꣳ रयिं पावक शꣳस्यम्। रास्वा**
३ २ ३ १ २ ३ १ २
**च न उपमाते पुरुस्पृहꣳ सुनीती सुयशस्तरम् ॥४३॥(क)**

**पदपाठ:।** आ अ०। न: ४। अग्ने सं०। वयोवृधम् २। रयिम् २। पावक सं०। शंस्यम् २। रास्वा क्रि०। च अ०। न: ४। उपमाते सं०। पुरुस्पृहम् २। सुनीती ३। सुयशस्तरम् २।

**अन्वय:।** [हे] पावक अग्ने! वयोवृधं शंस्यं रयिं न: आ [हर], हे उपमाते! न: सुनीती (=सुनीत्या) पुरुस्पृहं सुयशस्तरं च रास्वा।

**आधियाज्ञिकम्।** हे 'पावक' शोधक 'अग्ने'! 'वयोवृधम्' आयोरन्नस्य च वर्धकं 'शंस्यं' प्रशंसनीयं 'रयिं' धनं 'न:' अस्मभ्यम् 'आ' हर, हे 'उपमाते' घृतप्रिय, यज्ञविधात:! 'न:' अस्मभ्यं 'सुनीती' सुनीत्या, शोभननयनेन 'पुरुस्पृहं' बहुभि: स्पृहणीयं 'सुयशस्तरम्' अत्यन्तशोभनकीर्त्तिधनं 'रास्वा' देहि।

---

(क) ऋ० ६।४।३४ ॥

**आध्यात्मिकम्।** हे 'पावक' पवित्रकर्त्तः 'अग्ने' परमात्मन्! 'वयोवृधम्' आयोरन्नस्य च वर्धकं 'शंस्यं' प्रशंसनीयं 'रयिं' धनं 'नः' अस्मभ्यम् 'आ' हर, हे 'उपमाति' उपमिमीते सर्वत्र व्याप्तः सन् रचयति सर्वं तादृश! 'नः' अस्मभ्यं 'सुनीती' सुनीत्या, शोभननयनेन 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'सुयशस्तरम्' अत्यन्तशोभनकीर्त्तिधनं 'रास्वा' देहि।

**निरुक्तम्।** वय इत्यन्ननाम ॥ ३।८।४ ॥

## अथैकादशी।

यो विश्वा दयते इत्यृचः काण्वः सोभरिर्ऋषिः। साम चतुष्टयं, द्वे हरसी अग्नि ऋषिः, द्वे दैर्घश्रवसे दीर्घश्रवा ऋषिः (अग्ने हरसी द्वे दैर्घश्रवसे द्वे। आ० ग्रा०) बृहती। अग्निः। विनियोगस्त्वाग्नेयक्रतोः प्रातरनुवाकप्रकरणे।

२उ ३ १ २ ३ २ ३ १ २ ३र २र
**यो विश्वा दयते वसु होता मन्द्रो जनानाम्।**
३ १र २र ३ १ २ ३ १र २र ३ ३ १ २
**मधो र्न पात्रा प्रथमान्यस्मै प्रस्तोमायन्त्वग्नये** ॥४४॥ (क)

**पदपाठः।** यः १। विश्वा २। दयते क्रि०। वसु २। होता १। मन्द्रः १। जनानाम् ६। मधोः ६। न अ०। पात्रा २। प्रथमानि २। अस्मै ४। प्र अ०। स्तोमा १। यन्तु क्रि०। अग्नये ४।

**अन्वयः।** यः होता मन्द्रः विश्वा (=विश्वानि) वसु (=वसूनि) जनानां दयते [तस्मै] अस्मै अग्नये मधोः पात्रा (=पात्राणि) न प्रथमानि स्तोमा (=स्तोमानि) [स्तुतीनां] प्रयन्तु।

**आधियाज्ञिकम्।** 'यः' 'होता' होमनिष्पादकः 'मन्द्रः' हर्षकरः 'विश्वा' विश्वानि सर्वाणि 'वसु' वसूनि, धनानि 'जनानां'

(क) ऋ० ६।७।१४ ॥

जनेभ्यः 'दयते' प्रयच्छति तस्मै 'अस्मै' 'अग्नये' 'मधोः' सोमस्य 'पात्रा' पात्राणि 'न' इव 'प्रथमानि' मुख्यानि 'स्तोमा' स्तोमानि समूहाः स्तुतीनामिति 'प्रयन्तु' गच्छन्तु। यथा मधुररस-पात्रेण हृष्यति जनस्तथास्मत्कृतैराहुतिभिः स्तुतिसङ्घैश्च त्वमपि प्रसीद वर्द्धस्व च।

**आध्यात्मिकम्।** 'यः' 'होता' सुखस्य दाता 'मन्द्रः' हर्षकरः 'विश्वा' विश्वानि सर्वाणि 'वसु' वसूनि ज्ञानधनानि 'जनानां' जनेभ्य उपासकेभ्यः 'दयते' प्रयच्छति तस्मै 'अस्मै' 'अग्नये' परमात्मने 'मधोः' 'पात्रा' 'न' सोमस्य पात्राणीव 'प्रथमानि' मुख्यानि 'स्तोमा' स्तोमानि समूहाः स्तुतीनामिति 'प्रयन्तु' गच्छन्तु। यथा मधुररस-पानेन हृष्यति जनस्तथास्मत्कृतैः स्तुतिसमूहैस्त्वमपि प्रसीद।

**निरुक्तम्।** मन्द्रा मदना ॥ ११।२९।१ ॥ मधु सोममित्यौपमिकं माद्यतेः ॥ ४।८।१ ॥ मधु धमतेर्विपरीतस्य ॥ १०।३१।२ ॥ प्रथम इति मुख्यनाम प्रतमो भवति ॥ २।२२।१ ॥

---

## अथ व्याकरणम्।

अग्नये (३५, ३६)—४र्थी १व०।

अग्ने (३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३)—सं० १व०।

अद्या (४०)—'सद्यः परुत्०' ५।३ २२ इति निपातितम्, अन्यस्मिन्नहनीति अद्य। इदमोऽश्भावः। 'निपातस्य च' ६।३।१२७ इति दीर्घः।

अप्रोषिवान् (३९)—नञ् + प्र + वस निवासे + क्वनिप् 'अन्येभ्योऽपि०' ३।२।७५ इति। १मा १व०।

अमर्त्य (४०)—सं०।

अमृतम् (३५)—नञ् + मृङ् प्राणत्यागे + क्तन् 'तनि मृङ्भ्यां किच्च' उ० ३।८८ इति। २या १व०।

अर्चिभिः (३७)—'अर्च' पूजायाम् भ्वा० प० से० अर्चति, अस्मात् 'अर्चिशुचि०' उ० २।१०८ इति इसिः। अर्च्यते इति। अर्चिरुः ३या बहु व०।

असि (३९, ४०, ४१)।

अस्मै (४४)—इदं [अस्य १द] शब्दस्य पुंसि ४र्थी १व० ।

अस्य (४१)— ।

आ (४३)—अ० ।

आवहा (४०)—आ + वह प्रापणे लोट् मध्यम पु० १व० । 'द्व्यचोऽतस्तिङः' ६।३।१३५ इति दीर्घः ।

आ विवासन्ति (४२)—आ + वि + वसे णिच् । 'छन्दस्युभयथा' ३।४।११७ इति अपि आर्धधातुकत्वाण्णिलोपः । यद्वा वाधातोः [वायोः २द] अन्तर्भावितण्यर्थादागमयितुमिच्छतीत्यर्थे सन्, आह्वानेच्छा परिचर्यायां पर्यवस्यतीति विवासति शब्दः परिचर्य्यार्थे निघण्टौ पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः, 'सन्यतः' ७।४।७९ इतीत्वम् । लटि प्रथम पु० बहु व० ।

इत् (४२)—[२द] ।

उत (३६)—[१द] ।

उपमाते (४३)—उप + माङ् माने शब्दे च [परमात् १द] + क्तिन् । सं० १व० ।

उषर्बुधः (४०)—'उष' दाहे भ्वा० प० से० ओषति, अस्मात् 'उषः किच्च' उ० ४।२३४ इत्यसिः, कित्वान्न गुणः । ओषति उष्णी करोतीति उषः प्रातःकालः । उषसि बुध्यन्ते ये ते, उषः + बुध अवबोधने + इगुपधात्कः । २या बहुव० ।

उषसः (४०)—६ष्ठी १व० ।

ऊत्या (४१)—[ऊतये १द] ३या १व० ।

ऊर्ज्जाम्पते (३६)—'ऊर्ज्ज' बलप्राणनयोः चु० उ० से० ऊर्ज्जयति, + क्विप् । ऊर्ज्जयति प्राणयति बलं ददाति इति ऊर्क् अन्नम् । उर्ज्जां पतिः सं० १व० ।

ऊर्वम् (३८)—उरु इति बहुनाम नि० ३।१।३।१ । 'वाच्छन्दसि' ६।१।१०६ इति पूर्वरूपाभावपक्षाश्रयात् 'र्वोरुपधाया दीर्घइकः' ८।२।७६ इति दीर्घादेशः । २या १व० ।

ऋतः (४२)—'ऋ' गतौ [अरम् ३द०], जु० प० अनि० इयर्त्ति, 'ऋच्छ' गतीन्द्रियप्रलयमूर्त्तिभावेषु तु० प० से० ऋच्छति, एभ्यः 'अञ्चिघृसिभ्यः क्तः' उ० ३।८९ इति क्तः । १मा १व० ।

एकया (३६)—इण् गतौ धातोः 'इण् भी का पा०' उ० ३।४३ इति कन् । एति प्राप्नोतीत्येका, टाप् । ३या १व० ।

कविः (४२)—३द० ।

गाधम् (४१)—'गाधृ' प्रतिष्ठालिप्सयोर्ग्रन्थे च भ्वा० आ० से० गाधते, धातोः अच् गाधस्तम् २या १व० ।

गिरा गिरा (३४)—वीप्सायां द्वित्वम् [१द] ।

गीर्भिः (३६)—३या बहु व० ।

गृहपते (३९)—'ग्रह' उपादाने क्र्या० उ० से० गृह्णाति, गृह्णीते, धातोः 'गेहे कः' ३।१।

१४४ इति कः। यद्वा 'गृह' गर्हणे भ्वा० आ० वे०, गर्हते, धातोः इगुपध-लक्षणः कः। गृहस्य पतिः गृहपतिस्तस्य सं० १व०।

गोनाम् (३८)—[गोपवनः ३८] 'ह्रस्वनद्यापो०' ७।१।५४ नुड़ित्यनुवर्त्य 'श्रीग्रामण्योश्छन्दसि' ७।१।५६ छन्दसीति चानुवर्त्य 'गोः पादान्ते' ७।१।५७ इति नुट्, गोनाम् गवां ६ष्ठी बहु व०।

च (३५)—चर गतौ, चिञ् चयने, 'चण्' दाने भ्वा० प० से० चणति, एभ्यः अन्येभ्योऽपीति डः। अव्ययसंज्ञा। समुच्चये। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वये।

चतसृभिः (३६)—चतधातोः [अमीवचातनम् ३८] 'चतेरुरन्' उ० ५।५८ इति उरन्। चतति याचतेऽसौ चतुः। स्त्रियां चतसृत्ताभिः ३या बहु व०।

चित्रः (४१)—चिञ् धातोः 'अमि चिमि' उ० ४।१६४ इति क्तः। चीयते इति चित्रः (म)। १मा १व०।

चित्रम् (४०)—२या १व०।

चोदय (४१)—'चुद' सञ्चोदने चु० प० चोदयति, धातोः लोटि मध्यम पु० १व०।

जनानाम् (३८, ४४) ६ष्ठी बहु व०।

जरितः (३९)—'जॄ' वयोहानौ चु० प० जारयति + तृच्, सं० १व०।

जातवेदः (४०)—सं० १व०।

जातवेदसम् (३६) [३८०]।

तपानः (३९)—तपधातोः [तपिष्ठैः ३८] 'ताच्छील्य०' ३।२।१२९ इति चानश्। तपति, तप्यते, तच्छीलो वा तपानः १मा १व०।

तिसृभिः (३६)—'तरते ड्रिः' ५।६६ इति, तरतीति त्रिः। 'त्रिचतुरोः स्त्रियां तिसृचतसृ' ७।२।९९ इति तिसृ आदेशः। 'अचि र ऋतः' ७।२।१०० इति रेफादेशः। ३या बहु०।

तु (४१)—'तुद' व्यथने तु० उ० अनि० तुदति, ते, धातोर्मितद्र्वादित्वाड्डुः। अव्ययसंज्ञा।

तुचे (४१)—'तुज' हिंसायाम् भ्वा० प० से० तोजति, + क्विप्। यद्वा 'ष्टुच' प्रसादे भ्वा० आ० से० स्तोचते + क्विप्। सलोपः। तस्मै॥

त्रातः (४२)—त्रैङ् पालने धातोस्तृच्। सं० १व०।

त्वम् (४०, ४१, ४१, ४२)—[१८०]।

त्वा (४२)—[३८०]।

त्वे (३८)—युष्मच्छब्दस्य षष्ठ्येकवचने 'सुपां सुलुक्०' ७।१।३९ इति विभक्तेः शेभावः।

दक्षसे (३५)—'दक्ष' वृद्धौ शीघ्रार्थे च भ्वा० आ० से० दक्षते, असुन्। ४र्थी १व०।

दयते (४४)—'दय' दानगतिरक्षणहिंसाऽदानेषु भ्वा० आ० से० दयते।

दयन्त (३८)—दयन्ते।

दाशुषे (४०)—[३८०]

दिवः (३९)—[३८]

दीदिवः (४२)—दिवु धातोः 'छन्दसि लुङ्लङ्लिटः' ३।४।६ इति लडर्थे लिट् ( दिवु णल्—दिव् अ ) क्वसुः ( दिव् अ वस् ) द्विर्भावः ( दिव्दिव् अ वस् ) 'हलादिः शेषः' ७।४।६० अभ्यासस्यादिर्हल् शिष्यते ( दि दिव् वस् ) 'तुजादीनां दीर्घोऽभ्यासस्य' ६।१।७ ( दीदिव् वस् ) 'वस्वेकाजाद्घसाम्' ७।२।६७ इति वसो रिट् प्रतिषेधः 'लोपो व्योर्वलि' ६।१।६६ इति वलोपः ( दीदि वस् ) कित्वाद्गुणाभावः, सम्बुद्धौ 'उगिदचां सर्वनामस्थानेऽधातोः' ७।१।७० इति नुम्, हल्ङ्यादिशेषः, संयोगान्तलोपः 'मतुवसो रु सम्बुद्धौ छन्दसि' ८।३।१ इति रुत्वं, विसर्गः। सं० १व०।

दीदिहि (३७)—दिव धातोः शपः श्लुः ( बहुलं छन्दसि २।४।६ ) अभ्यासस्य दीर्घः।

दुरोणयुः (३९)—दुः पूर्वादवते र्नकि रुटि गुणः। 'यु' मिश्रणेऽमिश्रणे च अ० प० से०। दुरोणं गृहं यौति सः, कुप्रत्ययः।

देव (३७, ३९)—[२८]।

देवान् (४०)—२या बहु व०।

द्वितीयया (३६)—द्वयोः पूरणः 'द्वेस्तीयः' ५।२।५४ इति द्विशब्दात्तीयः, टाप्, तया।

न (३५, ४४)—।

नः (३६, ४१, ४१, ४३, ४३)—।

पात्रा (४४)—'सर्वधातुभ्यष्ट्रन्' उ० ४।१५९ पिबत्यनेन तत्पात्रम्, पाति रक्षतीति पात्रो वा। यद्वा 'दादिभ्यश्छन्दसि' उ० ४।१७० इति त्रन्। तानि पात्राणि, 'सुपां सुलु'गिति विभक्तेर्लुक्।

पायुः (३९)—'कृ वा पा०' उ० १।१ इति उण्। पाति रक्षतीति पायुः।

पावक (३७, ४३)—[३८]।

पाहि (३६, ३६, ३६, ३६)—[१८]।

पुरुस्पृहम् (४३)—पुरून् [पुरुतमम् ३८] बहून् स्पृहयति तं 'स्पृह' ईप्सायाम् चु० प० +क्विप् तम्।

प्रथमानि (४४)—'प्रथेरमच्' उ० ५।६८ प्रथते प्रख्यातो भवतीति प्रथमं तानि।

प्र प्र शंसिषम् (३५)—'प्रसमुपोदः पादपूरणे' ८।१।६ इति द्वित्वं पादपूरणार्थकम्। 'शंसु' स्तुतौ भ्वा० प० से० शंसति, लुङि व्यत्ययेन अलोपः।

प्र यन्तु (४३)—प्र+इण् लोट् 'इणो यण्' ६।४।८१ अजादौ प्रत्यये परे।

प्रियम् (३५)—[१८]।

प्रियासः (३८)—जसोऽसुक्।

भरद्वाजे (३७)—'भृञ्' भरणे भ्वा० उ० अनि० भरति, ते, + शतृ: भरन् धारको वाजोऽस्य, तस्मिन्।

मघवान: (३८)—'महि' वृद्धौ भ्वा० आ० से० मंहते, चु० मंहयति, ते, आभ्यां 'घञर्थे कविधानम्' वा० ३।३।५८ इति कः। पृषोदरादित्वात् हस्य घः। मघं धनम्। 'तदस्यास्त्यस्मिन्०' ५।२।९४ इति मतुप्। मो वः। मघवानो धनवन्त: १मा बहु व०।

मधो: (४४)—मनधातो: [मन: १द] 'फलिपाटि०' उ० १।१८ इति उप्रत्ययो धादेशश्च। मधुनस्य।

मन्द्र: (४४)—'मद' तृप्तियोगे चु० उ० मदयति, + रक् 'स्फायि तञ्चि०' उ० २।१३ इति। मदयति तृप्तिं करोतीति मन्द्र: १मा १व०।

महान् (३९)—[३द]।

मित्रम् (३५)—[१द]।

य: (४३)—१मा १व० पुंसि।

यज्ञा यज्ञा (३५)—वीप्सायां द्वित्वम्। विभक्तेर्डादेश:।

यन्तार: (३८)—इण् + शतृ = यन्ता, ते।

यविष्ठ (३७)—यौति मिश्रयत्यमिश्रयति वा 'कनिन् युवृषि०' उ० १।१५६ इति कनिन्। युवा। अयमेषामतिशयेन युवा 'अतिशायने०' ५।३।५५ इतीष्ठन्। 'स्थूलदूरयुव०' ६।४।१५६ इति यणादिलोपगुणौ। सं० १व।

ये (३८)—[३द]।

रक्षस: (३९)—रक्षतेर्बाहुलकादसुन्। रक्ष्यते यस्मात्तद्रक्ष:। ६ष्ठी १व०।

रथी: (४१)—रथोऽस्यास्तीति ई: ( छन्दसीवनिपौ च वक्तव्यौ वा० ५।२।१२२ ) १मा १व०।

रयिम् (४३)—[२द]।

राध: (४०)—'राध' संसिद्धौ स्वा० प० अनि० अस्मादसुन्। राध्नोति कार्य्याणीति राधो धनम्। २या १व०।

राधांसि (४१)—२या बहु व०।

राय: (४१)—'रा' दाने धातो: 'राते र्डै:, उ० २।६६ राय्यते इति रा: धनम्। ६ष्ठी १व०।

रास्वा (४३)—'रा' धातो: व्यत्ययेनात्मनेपदम्, लोट् मध्यम पु० १व० 'द्व्यचोऽतस्तिङः' ६।३।१३५ इति दीर्घ:।

रेवत् (३७)—रा: शब्दात् 'रयेर्मतौ बहुलम्' वा० ६।१।३४ रयि शब्दस्य मतौ परत: सम्प्रसारणं स्याच्छन्दसि बहुलम् 'रयि + मतु = र इ + मतु = रे ('वाच्छन्दसि' ६।१।१०६) + मत् = रे वत् ('छन्दसीर:' ८।२।१५ इवर्णान्तात् रेफान्ताच्च परस्य मतो र्मस्य व: स्यात् ) विभक्तेर्लुक् ( रेवान् ) १मा।

वः (३५)—।

वयम् (३५)—।

वयोवृधम् (४३)—'वय' गतौ भ्वा० आ० से० वयते, 'वी' गतिव्याप्तिप्रजनकान्त्यसनखादनेषु वेति, 'अज' गतौ अजति, एभ्योऽसुन्। वयांसि वर्द्धयतीति वयोवृध् क्विप्। अम्।

वसु (४४)—वस्ते आच्छादयति दुःखं येन, शॄस्वृ स्निहि०' उ० १।१० इति उः। विभक्तेर्लुक्।

वसो (३६, ४१)—पुंसि सम्बुद्धौ।

विदाः (४१)—'विद्लृ'लाभे धातोरन्तर्भावितण्यर्थाल्लोटि सिपि अडागमः, तुदादित्वाच्छः 'शे मुचादीनाम्' ७।१।५९ इति नुम् न भवति अनित्यमागमशासनमिति वचनेन तस्यानित्यत्वात्, 'इतश्चलोप०' ३।४।९७ इतीकारलोपः।

विप्रासः (४२)—'वप' बीजसन्ताने भ्वा० उ० अनि० वपति, ते, 'ऋज्रेन्द्राग्र०' उ० २।२८ इति रन् प्रत्यये इत्वं गुणाभावश्च। यद्वा 'विप' इति सङ्ग्राम नाम, सोऽस्यास्तीति री मत्वर्थीयः, पृषोदरादित्वाज्जश्त्वाभावः। यद्वा वि+'प्रा' पूरणे अ० प० अनि०+कः 'आतो लोप इटि च' ६।४।६४ ॥ जसोऽसुक् ॥

विवस्वत् (४०)—[१द]।

विश्पतिः (३९)—[३द] १मा।

विश्वा (४४)—विभक्तेर्लुक्।

बृहद्भिः (३७)—'वर्त्तमानेपृषद्बृहन्महत्०' उ० २।८४ इत्यतिप्रत्ययान्तो निपातः। बर्हति वर्द्धतेऽसौ बृहन्महदर्थे। ३या बहु व०।

वेधसः (४२)—वि+धा+'विधाञो वेध च' उ० ४।२२५ इत्यसि विधाञो वेधादेशः। विदधाति सर्वमिति वेधास्ते १मा बहु व०।

शंस्यम् (४३)—शंस [प्रप्रशंसिषम्] धातोर्यत्। १मा।

शुक्रेण (३७)—[शुक्रः १द] ३या १व०।

शोचिषा (३७)—[३द]।

सन्तु (३८)—[असि १द] अस धातोर्लोटि प्रथम पु० बहु व०।

सप्रथाः (४२)—सर्वतः पृथुः—प्रथतेरसुन् सर्वत इत्यस्य सभावः। १मा।

समिधान (४२)—सम्+इन्धी+शानच्, सं० १व०।

समिधानः (३७)—१मा १व०।

सुनीती (४३)—सु+'णीञ्' प्रापणे+क्तिन् 'सुपां सुलु'गित्यस्योपरि 'इयाडियाजीकाराणामुपसंख्यानम्' वा० इति ईकारादेशः। सुनीत्या।

सुयशस्तरम् (४३)—सु+यशः ('अशेर्देवने युट् च' ४।१९१ इति अशू धातोरसुन् प्रकृतेर्युडागमश्च)+तरप् २या १व०।

सूरयः (३८)—'षूङ्' प्राणिप्रसवे दि० आ० से० अस्मात् 'सूङः क्रिः' उ० ४।६४ इति क्रिः। सूते इति सूरिस्ते।

सोमा (४४)—[१८] विभक्तेर्लुक्।

स्वाहुत (३८)सु+आ+हु+क्तः, सं० १४०।

होता (४४)—[१८]।

इति चतुर्थी दशतिश्चतुर्थखण्डश्च।

---

प्रथमम् ( आग्नेयं ) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। पञ्चमः खण्डः। पञ्चमो दशतिः।

## अथ प्रथमा।

वामदेव ऋषिः। चत्वारि सामानि, द्वे अग्नेः स्वभूते आग्नेये, द्वे च गोतमस्य सम्बन्धिनो मनाज्ये ( अग्नेराग्नेये द्वे गोतमस्य मनाज्ये द्वे। आ० ब्रा० ) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे।

२ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १र २र
**एना वो अग्निं नमसोर्जो नपातमाहुवे। प्रियं चेतिष्ठ-**
३ १ २ ३ १र १र ३ २ ३ १ २
**मरतिं स्वध्वरं विश्वस्य दूत ममृतम्॥ ४५॥ (क)**

**पदपाठः।** एना ३। वः ४। अग्निम् २। नमसा ३। ऊर्ज्जः ६। नपातम् २। आहुवे क्रि०। प्रियम् २। चेतिष्ठम् २। अरतिम् २। स्वध्वरम् २। विश्वस्य ६। दूतम् २। अमृतम् २।

---

(क) ऋ० ५।२।२१॥

**अन्वयः।** [ हे मनुष्याः ! ] ऊर्ज्जः नपातं प्रियं चेतिष्ठम् अरतिं स्वध्वरं विश्वस्य दूतम् अमृतम् अग्निम् एना नमसा वः (=युष्मदर्थम्) आहुवे।

**आधियाज्ञिकम्।** हे मनुष्याः ! 'ऊर्ज्जः' बलस्य 'नपातं' पुत्रं, बलेन हि अरणिकाष्ठसकाशादग्निरुत्पाद्यतेऽतस्तस्य पुत्रत्वमिति 'प्रियं' 'चेतिष्ठम्' अतिशयेन प्रज्ञापकम् 'अरतिं' सर्वत्र गन्तारं 'स्वध्वरं' शोभनयज्ञं 'विश्वस्य' 'दूतं' सर्वस्य दौत्यकार्ये विनियुक्तम् 'अमृतम्' अमरणधर्म्माणम् 'अग्निं' 'एना' एतेन 'नमसा' अन्नेन स्तुत्या वा 'वः' युष्मदर्थम् 'आहुवे' आह्वयामि अहमृत्विगिति।

**आध्यात्मिकम्।** हे मनुष्याः ! 'ऊर्ज्जः' आत्मबलस्य 'नपातं' न पातयितारं, रक्षकं 'प्रियं' 'चेतिष्ठम्' अतिशयेन ज्ञातारम् 'अरतिं' स्वामिनं 'स्वध्वरं' शोभनयज्ञं 'विश्वस्य' 'दूतं' सर्वस्य दुःखापहारिणं, कर्म्मफलदातारं वा 'अमृतं' विनाशरहितम् 'अग्निं' परमात्मानम् 'एना' 'नमसा' एतया स्तुत्या 'वः' युष्मदर्थम् 'आहुवे' आह्वयामि अहमुपासक इति।

**निरुक्तम्।** नपादित्यपत्यनाम ॥ २।१।२ ॥ नपादित्यनन्तरायाः प्रजायाः [पौत्राख्यस्य] नामधेयं निर्णततमा भवति ॥ ८।६ १ ॥ चेत इति प्रज्ञानाम ॥ ३।१२।१७ ॥

## अथ द्वितीया।

भर्ग ऋषिः। दैवराजं साम, दैवराज ऋषिश्च ( दैवराजञ्च। आ० ब्रा० ) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे।

२ ३ १२ ३ २३ २ ३ १२ १ २ ३ १
**शेषे वनेषु मातृषु सं त्वा मर्त्तास इन्धते। अतन्द्रो हव्यं**
२ ३ २ ३ २उ ३ १ २
**वहसि हविष्कृत आदिद्देवेषु राजसि ॥ ४६ ॥ (क)**

(क) ऋ० ६।४।२४ ॥ 'मातॄः' 'हव्या'।

**पदपाठः**। ग्रेषे क्रि०। वनेषु ७। मातृषु ७। सम् अ०। त्वा २। मर्त्तास १। इन्धते क्रि०। अतन्द्रः १। हव्यम् २। वहसि क्रि०। हविष्कृतः ६। आत् अ०। इत् अ०। देवेषु ७। राजसि क्रि०।

**अन्वयः**। [हे अग्ने!] [त्वं] वनेषु मातृषु ग्रेषे, [तत्र-स्थितं] त्वा मर्त्तास समिन्धते; [एवं समिद्धः त्वम्] अतन्द्रः हविष्कृतः हव्यं वहसि, आत् इत् (=अनन्तरमेव) देवेषु राजसि।

**आधियाज्ञिकम्**। हे अग्ने! त्वं 'मातृषु' मातृभूतेषु 'वनेषु' काष्ठेषु, अरणिद्वयेषु 'ग्रेषे' निवससि, तत्रस्थितं 'त्वा' त्वां 'मर्त्तासः' मनुष्या ऋत्विज इति 'समिन्धते' मन्थनेनोत्पाद्य सम्यक् प्रदीपयन्ति; एवं समिद्धस्त्वम् 'अतन्द्रः' अनलसः 'हविष्कृतः' यजमानस्य 'हव्यं' हवनीयं द्रव्यं 'वहसि' देवेभ्यः प्रापयसि, 'आत इत्' अनन्तरमेव यज्ञकर्त्तॄणां हव्यद्रव्याणि नीत्वा 'देवेषु' त्रयस्त्रिंशत्सु 'राजसि' विराजसे।

**आध्यात्मिकम्**। हे अग्ने! परमात्मन्! त्वं 'वनेषु' वननीयेषु सम्भजनीयेषु 'मातृषु' मानकर्त्तृषु उपासकेषु तेषां साक्षात्काररूपोत्पत्तिभूमिषु हृद्देशेषु वा व्याप्य 'ग्रेषे' निवससि, वर्त्तसे तत्रस्थितं 'त्वा' त्वां 'मर्त्तासः' मननशीला योगिनः 'समिन्धते' सम्यग्ध्यायन्ति; एवं समिद्धस्त्वम् 'अतन्द्रः' निरलसः सदैकरसत्वादिति 'हविष्कृतः' उपासकस्य 'हव्यं' दातव्यं कर्मफलं 'वहसि' तेभ्यः प्रापयसि, 'आत् इत्' अनन्तरमेव 'देवेषु' प्रकाशगुणेषु 'राजसि' विराजसे।

**निरुक्तम्**। वनं वनोतेः (वनोतिः कान्तिकर्म्मा) ॥ ८।३।१ ॥

## अथ तृतीया।

सौभरि ऋषिः। एकं साम कुशिकपुत्रस्य गाथिनः (गाथिनश्च कौशिकस्य साम। आ० ब्रा०) बृहती। अग्निः। विनियोगस्तु

( विन्दते गातुं प्रतितिष्ठत्येतेन तुष्टुवानः। ता० म० ब्रा० ८।५।१० ) एतेन साम्ना तुष्टुवानो गातुं लौकिकवैदिकविधेयं मार्गं विन्दते। यद्वा ( प्रज्वलितेऽदर्शि गात्विति। लाट्या० श्रौतसू० ) प्रज्वलितेऽग्नौ एतत् साम गायेत।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ २ ३ २
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः। उपोषु-
३ १र २र ३ १ २ ३ १ २ ३ १ २
जात मार्य्यस्य वर्द्धन मग्निं नक्षन्तु नो गिरः ॥४७॥ (क)

**पदपाठः।** अदर्शि क्रि०। गातुवित्तमः १। यस्मिन् ७। व्रतानि २। आदधुः क्रि०। उप अ०। उ अ०। सुजातम् २। आर्य्यस्य ६। वर्द्धनम् २। अग्निम् २। नक्षन्तु क्रि०। नः ६। गिरः १।

**अन्वयः।** यस्मिन् व्रतानि आदधुः गातुवित्तमः [सः अग्निः] अदर्शि। नः गिरः सुजातम् आर्य्यस्य वर्द्धनम् अग्निम् उपोनक्षन्तु।

**भाष्यम्।** 'यस्मिन्' अग्नौ, परमात्मनि वा 'व्रतानि' कर्म्माणि यज्ञादीनि 'आदधुः' आहितवन्तः ऋत्विजः, समर्पितवन्तो वा उपासकाः, 'गातुवित्तमः' अतिशयेन सन्मार्गाणां ज्ञाता सोऽग्निरीश्वरो वा 'अदर्शि' प्रादुरभूत्, सर्वत्र विराजते। 'नः' अस्माकं 'गिरः' स्तुतयः 'सुजातं' सम्यक् प्रादुर्भूतं, सुप्रसिद्धं वा 'आर्य्यस्य' 'वर्द्धनं' सद्भावयुक्तस्य पुरुषस्य वर्द्धकम् 'अग्निं' भौतिकं परमात्मानं वा 'उपोनक्षन्तु' उपगच्छन्तु।

**निरुक्तम्।** गातुं गमनम् ॥ ४।२१।२ ॥ गातुरिति पृथिवीनाम ॥ २।५।२ ॥ (ख) व्रतमिति कर्मनाम वृणोतीति सतः ॥ २।

(क) ऋ० ६।७।१२ ॥ 'नक्षन्त'

(ख) गातुवित्तमः — पृथिवीस्थमार्गाणामतिशयेन ज्ञाता।

१।३।८॥ नक्षतिर्गतिकर्म्मा॥ २।९।१४॥ नक्षतिर्व्याप्तिकर्म्मा॥ २।१०।२॥(क)

## अथ चतुर्थी।

विवस्वत्पुत्रो मनुर्ऋषिः। द्वे सामनी बार्हदुक्थे बृहदुक्थ ऋषिः (बार्हदुक्थे द्वे। आ० ब्रा०) बृहती। विश्वेदेवाः। बहुविनियोगः।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे। ऋचा यामि**
३ २३ २३ १२
**मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम्॥ ४८॥** (ख)

**पदपाठः।** अग्निः १। उक्थे ७। पुरः अ०। हितः १। ग्रावाणः १। बर्हिः १। अध्वरे ७। ऋचा ३। यामि क्रि०। मरुतः १। ब्रह्मणस्पते सं०१ देवाः १। अवः २। वरेण्यम् २।

**अन्वयः।** उक्थे अध्वरे अग्निः पुरः हितः, ग्रावाणः [पुरोहिताः], बर्हिः [पुरोहितं], मरुतः देवाः [च] [पुरोहिताः] [हे] ब्रह्मणस्पते! ऋचा वरेण्यम् अवः [त्वां] यामि (=याचे)।

**आधियाज्ञिकम्।** 'उक्थे' स्तोत्रशस्त्रात्मके 'अध्वरे' हिंसारहिते यज्ञे 'अग्निः' यज्ञाग्निः 'पुरः' पुरत उत्तरवेद्यां 'हितः' ऋत्विग्भिः स्थापितः, 'ग्रावाणः' सोमाभिषवार्थं प्रस्तराः पुरोहिताः, 'बर्हिः' दर्भासनं पुरोहितं, 'मरुतः' ऋत्विजः 'देवाः' वस्वादयो (ग)

---

(क) उपो गच्छन्तु=व्याप्नुवन्तु।

(ख) ऋ० ६।२।३१॥ 'ब्रह्मणस्पतिम्' 'देवान्'।

(ग) स होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति॥३॥ कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदꣳ सर्वं वसु हितमेते हीदꣳ सर्वं वासयन्ते तद्यदिदꣳ सर्वं

देवाः पुरोहिताः (...आ त्वा वसवो रुद्रा आदित्याः सदन्तु। यजुः २।५) अग्निहोत्रेण सर्वे देवा स्तृप्यन्त इति, हे 'ब्रह्मणस्पते' अन्नपते अग्ने! 'ऋचा' सूक्तरूपया वाचा 'वरेण्यं' वरणीयम् 'अवः' रक्षणं त्वां 'यामि' याचे॥ अग्निहोत्रकाले सर्वान् देवानुद्दिश्य योऽग्नौ द्रव्याणां प्रक्षेपः क्रियते स तान् देवान् प्राप्नोति, ते तत्पृथग्भूतं द्रव्यं रक्षित्वा पुनः पृथिवीं प्रति विमुञ्चन्ति येन दिव्या ओषधादयः पदार्थाः जायन्ते, सुखं च भवत्यतो वरणीयं रक्षणं याचे इति मन्त्रे सुष्ठूक्तम्।

**आध्यात्मिकम्।** 'उक्थे' प्रशंसनीये वाङ्मये 'अध्वरे' ज्ञानयज्ञे 'अग्निः' ज्ञानाग्निरूपः परमात्मा 'पुरः हितः' पुरतः स्थापितस्तस्य सर्वव्यापकत्वात्, 'ग्रावाणः' गृणन्ति उच्चारयन्ति एभिस्ते, शब्दोच्चारणकरणानि कण्ठताल्वादीनि [स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः। पा० शि०] सोमाभिषवार्थं प्रस्तरा इव परमानन्दाभिषवार्थं पुरोहितानि, 'बर्हिः' बृंहति वर्द्धते ज्ञानं यत्र तत् हृदयं दर्भासनमिव पुरोहितं, 'मरुतः' पञ्च प्राणाः ऋत्विज इव 'देवाः' दशेन्द्रियाणि देवता इव पुरोहितानि। हे 'ब्रह्मणस्पते' वेदपते परमात्मन्! 'ऋचा' सूक्तरूपया वाचा 'वरेण्यं' वरणीयम् 'अवः' रक्षणं त्वां 'यामि' याचे।

अस्मिन् विषये ऐतरेयारण्यके, आर० २। अ० १। खं० २ एवमुक्तम्, 'पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात्' शिरः पाण्यादिमान्देहः पुरुषः, उत्कर्षहेतुत्वात्तस्योक्थत्वम्॥

**निरुक्तम्।** ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा॥

---

वासयन्ते तस्माद्वसव इति॥ ४॥ कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति॥५॥ कतम आदित्या इति, द्वादश मासाः संवत्सरस्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति॥ ६॥ कतम इन्द्रः कतमः प्रजापतिरिति। स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति, कतमः स्तनयित्नुरित्यशनिरिति, कतमो यज्ञ इति पशव इति॥ श० ब्रा० का० १४। ब्रा० ७।३।९॥

६।८।२ ॥ ऋगिति वाङ्नामसु ॥ २।२३।१ ॥ ब्रह्मणस्पति-ब्रह्मणः पाता वा पालयिता वा ( ब्रह्मेत्यन्ननाम ॥ ३।९।४ ॥ धननाम ॥ ३।९।९ ॥ ब्रह्माणि कर्म्माणि ॥ १२।३४।१ ॥ ) १०।१२।३ ॥ अथापि वर्णलोपो भवति तत्त्वा यामीति ( यामि याचामि छान्दसः ) ॥ २।१।१० ॥ यामि याच्ञाकर्म्मसु ॥ ३।१९।११ ॥ वरेण्यो वरणीयः ॥ १२।१३।१ ॥ मरुत इति ऋत्विङ्नाम ॥ ३।१८।७ ॥

## अथ पञ्चमी ।

आङ्गिरसः सुदीतिः पुरुमीढो वा उभौ वा। एकं पौरुमीढं साम, पुरुमीढ ऋषिः ( पौरुमीढञ्च। आ० ब्रा० ) बृहती । अग्निः । विनियोगस्तु दशमदिने प्रातः सवनेऽच्छावाग्रूपे ।

३ १ २ २ ३ १ २ ३ १ २    ३ १ २    ३ २

**अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् । अग्निं**

३ १ २    ३ २उ ३ १ २ ३ १ २ ३ १

**राये पुरुमीढ ! श्रुतन्नरोऽग्निः सुदीतये छर्द्दिः ॥४९॥ (क)**

**पदपाठः ।** अग्निम् २। ईडिष्व क्रि०। अवसे अ०। गाथाभिः ३। शीरशोचिषम् २। अग्निम् २। राये ४। पुरुमीढ सं०। श्रुतम् २। नरः सं०। अग्निः १। सुदीतये ४। छर्द्दिः १।

**अन्वयः ।** [हे] पुरुमीढ ! [त्वम्] अवसे शीरशोचिषम् अग्निं गाथाभिः ईड़िष्व, अपि च [हे] नरः ! राये श्रुतम् अग्निम् [ईड़िध्वम्] [यतः] अग्निः सुदीतये छर्द्दिः ।

**भाष्यम् ।** हे 'पुरुमीढ' सुखं बहु सेक्तुमिच्छन्मनुष्य ! त्वम् 'अवसे' रक्षणाय 'शीरशोचिषं' शयनस्वभावरोचिषं सर्वस्मिन् भूतग्रामेऽन्तर्लीनतेजसं, सर्वव्यापिनं वा 'अग्निं' यज्ञाग्निं परमात्मानं वा 'गाथाभिः' स्तुतिरूपाभिर्वाग्भिः 'ईड़िष्व' स्तुहि, अपि च हे 'नरः'

(क) ऋ० ८।७१।१४ ॥ 'अग्निम्' ।

नेतारः 'राये' धनाय 'श्रुतं' प्रसिद्धं, श्रुतिसिद्धं वा 'अग्निं' पूर्वोक्त-मीड़िध्वम्, यतः सः 'अग्निः' भौतिकः परमेश्वरो वा 'सुदीतये' शोभन-दानाय उपासकाय छर्दिः गृहं, तद्दुःखनिवारकः अस्ति ।

**निरुक्तम्** । गाथेति वाङ्नाम ॥ २।२३।१ ॥ शीरमनुशायिन-मिति वाग्निमिति वा ॥४।१४।२ ॥ छर्दिरिति गृह नाम ॥३।१३।८॥

## अथ षष्ठी ।

प्रस्कण्व ऋषिः । कार्णश्रवसं साम कर्णश्रवा नाम ऋषिः, यद्वा प्रास्कण्वं साम प्रस्कण्वेन दृष्टम् ( कार्णश्रवसं च प्रास्कण्वं वा । आ० ब्रा० ) बृहती । अग्निः । विनियोगस्तु प्रातरनुवाके आश्विन-शस्त्रे ।

३ १ २ ३ १ २ ३१ २ ३१२ ३ २

**श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः । आ सीदतु**

३ १ २ ३ १ २ ३१ २ ३१२ ३२

**बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥ ५० ॥ (क)**

**पदपाठः** । श्रुधि क्रि० । श्रुत्कर्ण सं० । वह्निभिः ३ । देवैः ३ । अग्ने सं० । सयावभिः ३ । आसीदतु क्रि० । बर्हिषि ७ । मित्रः १ । अर्यमा १ । प्रातर्यावभिः ३ । अध्वरे ७ ।

**अन्वयः** । [हे] श्रुत्कर्ण अग्ने ! श्रुधि, मित्रः अर्यमा प्रात-र्यावभिः सयावभिः वह्निभिः देवैः [सह] अध्वरे बर्हिषि आसीदतु ।

**आधियाज्ञिकम्** । हे 'श्रुत्कर्ण' श्रवणसमर्थ 'अग्ने' ! 'श्रुधि' अस्मत्प्रार्थनां शृणु, का प्रार्थना ? 'मित्रः' वायुः [ मित्रो वै प्राणः । श० ब्रा० ] 'अर्य्यमा' ऋच्छति नियच्छति आकर्षणेन पृथिव्यादीन्स सूर्य्यः 'प्रातर्यावभिः' प्रातर्यज्ञाहुतिभिराहूते देवयजनं गच्छद्भि र्वस्वादिभि स्त्रयस्त्रिंशद्देवैः [ ···आ त्वा वसवो रुद्रा आदित्याः

(क) ऋ० १।४४।१३॥ 'आसीदन्तु' 'प्रातर्यावाणो अध्वरम्' ।

सदन्तु। य० २।५] 'सयावभिः' तैः सह समानगतिभिः 'वह्निभिः' हविर्वहनशीलैः ज्वालाभिः सूर्यकिरणै र्वायुभि र्वा 'देवैः' सह 'अध्वरे' यज्ञे, 'बर्हिषि' तदीयवेद्याम् 'आसीदतु' आहुतः सन्नुपविशतु, यज्ञमवस्थापयतु चेत्यस्मत्प्रार्थना।

**आध्यात्मिकम्।** हे 'श्रुत्कर्ण' श्रवणसमर्थ 'अग्ने' परमात्मन् 'श्रुधि' अस्मत्प्रार्थनां शृणु, का प्रार्थना ? 'मित्रः' प्राणवायुः 'अर्यमा' ऋच्छत्याकर्षतीत्यपानः 'प्रातर्यावभिः' 'प्रातर्ध्यानपरायणैः 'सयावभिः' प्राणापानयोः सहवर्त्तिभिः 'वह्निभिः' प्रकाशप्रदैः 'देवैः दशेन्द्रियैः सह 'अध्वरे' ज्ञानयज्ञे उपासनायामिति 'बर्हिषि' बृंहति वर्धते ज्ञानं यत्र तस्मिन् हृदयदेशे 'आसीदतु' सम्यक् स्थिरो भवतु भवत्कृपयेत्यस्मत्प्रार्थना। उपासनाकाले प्राणादय इन्द्रियादयश्च यदा स्थिरा भवेयुस्तदैवोपासना सम्यग्भवितुमर्हति अतस्तेषां स्थैर्यमनेन प्रार्थ्यते। प्राणापानयोः स्थैर्येण प्राणायामेनेति सर्वेन्द्रियाणां स्थैर्य्यं सम्पाद्यते। [ततः क्षीयते प्रकाशावरणम्। योग० ११५४ प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म्म। तथाचोक्तम्, 'तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति। पञ्चशिखा० ]।

**निरुक्तम्।** वह्निर्वोढा ॥ ३।४।१ ॥ अर्य्यमादित्योऽरीन्नियच्छति ॥ ११।२३।१ ॥

## अथ सप्तमी।

सौभरिर्ऋषिः। एकं दैवोदासं साम दिवोदास ऋषिश्च ( दैवोदासञ्च। आ० ब्रा० ) बृहती। अग्निः।

१र २र ३ २ ३२उ ३ २ ३ १ २ १ २ ३ १ २
**प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना। अनु मातरं**

२र ३ १र २र ३ १ २
**पृथिवीं वि वा वृते तस्थौ नाकस्य शर्म्मणि ॥५१॥ (क)**

(क) ऋ० ६।७।१३ ॥ 'अग्निर्देवाँ अच्छा न मज्मना' 'नाकस्य सानवि 'ववृते'।

**पदपाठः** । प्र अ० । दैवोदासः १ । अग्निः १ । देवः १ । इन्द्रः १ । न अ० । मज्मना ३ । अनु अ० । मातरम् २ । पृथिवीम् २ । वि वा वृते क्रि० । तस्थौ क्रि० । नाकस्य ६ । शर्म्मणि ७ ।

**अन्वयः** । देवः दैवोदासः अग्निः मज्मना इन्द्रः न मातरं पृथिवीम् अनु प्र-वि-वावृते, नाकस्य शर्म्मणि तस्थौ च ।

**भाष्यम्** । 'देवः' द्योतमानः 'दैवोदासः' दिवः प्रकाशस्य दासो दाता, स एव 'अग्निः' भौतिकः परमात्मा वा 'मज्मना' बलेन, स्वसामर्थ्येन हि 'इन्द्रः' 'न' सूर्य्य इव 'मातरं' 'पृथिवीं' स्वप्रादुर्भाव-भूमिं पृथिवीं, सर्वाधारभूतां पृथिवीं वा 'अनु' समन्ततः 'प्र-वि-वावृते' प्रकृष्टतया विस्तीर्णो भवति, व्याप्य तिष्ठतीति, 'नाकस्य' द्युलोकस्य सुखस्य वा 'शर्म्मणि' गृहे, सूर्य्यरूपे स्वस्वरूपे वा 'तस्थौ' तिष्ठति च ।

**निरुक्तम्** । इन्द्र इरां दृणातीति वा ॥ इरां ददातीति वा ॥ इरां दधातीति वा ॥ १०।८।२,३, ४ ॥ मज्मनेति बलनाम ॥ ३।८।७॥ नाक इति दिवो नाम । कमिति सुखनाम, तत्प्रतिषिद्धं, प्रति-षिध्येत । 'न वा अमुं लोकं जग्मुषे किं च नाकम् ।' न वा अमुं लोकं गतवते किं च नाऽसुखं, पुण्यकृतो ह्येव तत्र गच्छन्ति ॥ २।१४।३ ॥ शर्मेति गृहनाम ॥ ३।१३।८ ॥

## अथाष्टमी ।

मेधातिथिर्ऋषिः मेध्यातिथिर्वा । एकं सौक्रतवं साम, सुक्रतु-र्ऋषिस्य । बृहती । इन्द्रः । विनियोगस्तु महाव्रतयागे निष्केवल्यशंसने ।

२ ३ १र २र ३ १ २ ३ १ २ ३ १र २र ३ १
अध ज्मो अधवा दिवो बृहतो रोचनादधि । अया

२ क २र ३ २उ ३ १ २
वर्द्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥५२॥ (क)

(क) ऋ० ५।७।१३ ॥

**पदपाठः।** अध अ०। ज्मः ५। अधवा अ०। दिवः ५। बृहतः ५। रोचनात् ५। अधि अ०। अया ३। वर्द्धस्व क्रि०। तन्वा ३। गिरा ३। ममा ६। जाता २। सुक्रतो सं०। पृण क्रि०।

**अन्वयः।** हे सुक्रतो [इन्द्र!] अध ज्मः अधि अधवा दिवः बृहतः रोचनात् [च आगत्य] अया तन्वा ममा गिरा वर्द्धस्व, जाता (=जातान्) पृण [च]।

**भाष्यम्।** हे 'सुक्रतो' शोभनकर्म्मवन् इन्द्र परमात्मन् वा 'अध' अधुना 'ज्मः' ज्मन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी तस्याः 'अधि' उपरिष्टात् 'अधवा' अपि वा 'दिवः' द्युलोकात् 'बृहतः' महतः 'रोचनात्' प्रकाशमानात् च सूर्य्याद्विद्युतो वा आगत्य 'अया' अनया 'तन्वा' विस्तृतया 'ममा' मदीयया 'गिरा' स्तुतिरूपया वाचा 'वर्द्धस्व' वर्द्धितो भव, स्तूयमाना हि देवा वर्धन्ते इति, प्रसीदेति वा 'जाता' जातान् उत्पन्नान्मनोरथान् अस्मदीयान् जनान् वा अभिलषितफलैरिति 'पृण' आपूरय।

**निरुक्तम्।** ज्मा पृथिवी नाम ॥ २।५।२ ॥ रोचते इति ज्वलतिकर्म्मा ॥ २।२८।३ ॥

## अथ नवमी।

विश्वामित्र ऋषिः। द्वे सामनी काण्वे, कण्व ऋषिः (काण्वे द्वे। आ० व्रा०) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विन शस्त्रे च।

१ २ ३ २उ ३ १र ३ २ १र २र
**कायमानो वना त्वं यन्मातॄरजगन्नपः। न तत्ते अग्ने**
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
**प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभुवः ॥ ५३ ॥ (क)**

(क) ऋ० ३।९।५ ॥ 'आभव'।

**पदपाठः ।** कायमानः १। वना २। त्वम् १। यत् अ०। मातॄः २। अजगन् क्रि०। अपः २। न अ०। तत् अ०। ते ६। अग्ने सं०। प्रमृषे क्रि०। निवर्त्तनम् २। यत् अ०। दूरे ७। सन् १। इह अ०। आभुवः क्रि०।

**अन्वयः ।** [हे] अग्ने! कायमानः [स्वां योनिमिति] यत् त्वं वना (=वनानि, दारूणि) मातॄः अपः [च] अजगन् (=अगमः) [उपशाम्यन्निति], तत् (=तस्मात्) ते निवर्त्तनं (वर्त्म) न प्रमृषे (=प्रमृज्यते, लुप्यते), [कथं?] यत् (=यस्मात्) दूरे [अपि] सन् इह [पुनः] आभुवः (=भवसि) [अद्भ्यो वैद्युतात्मना, अरण्यो-र्मथ्यमान इति]।

**आधियाज्ञिकम् ।** हे 'अग्ने'! 'कायमानः' चायमानः पश्यन्निति, अथवा कामयमानः स्वां योनिमिति 'यत्' 'त्वं' 'वना' वनानि, दारूणि, दारुभ्योऽग्निर्जायते तदेतत्प्रसिद्धमेव, 'मातॄः' सर्वभूतनिर्मात्रीः 'अपः' जलं च, [आपो वा अग्नेर्योनिः] 'अजगन्' अगमः उपशाम्यन्निति, 'तत्' तस्मात् 'ते' तव 'निवर्त्तनं' वर्त्म 'न' 'प्रमृषे' प्रमृज्यते, लुप्यते, कथं गम्यते न लुप्यते मार्गः? 'यत्' यस्मात् 'दूरे' अपि 'सन्' 'इह' पुनः 'आभुवः' भवसि, अद्भ्यो वैद्युतात्मनाऽरण्योर्मथ्यमानो जायसे इति ॥

**आध्यात्मिकम् ।** हे 'अग्ने' शुभगुणप्रकाशक परमात्मन्! 'कायमानः' कामयमानः स्वां योनिमिति, कतमां? 'यत्' 'त्वं' 'वना' वननीयानि सम्भजनीयानि स्वाध्यायादियोगाङ्गानि [स्वाध्यायादिष्ट-देवता सम्प्रयोगः योगद० २।४४] 'मातॄः अपः' मातृभूतान् प्राणान् च [आपो वै प्राणाः। श० ब्रा० ३।६।२।४॥ सास प्राणं प्रपद्ये। य० ३६।१] प्राणभूतानि सामानि च, साम परमात्मनः प्राप्तिकारणम्, 'अजगन्' अगमः प्राप्तवानसि; 'तत्' 'ते' तव 'निवर्त्तनं' नितरां तत्रैव वर्त्तनं न 'प्रमृषे' प्रमृष्यते सह्यते; 'यत्' 'दूरे' अपि 'सन्'

अज्ञानतयैवं गम्यते न यथार्थतया ईश्वरस्य सर्वव्यापकत्वात् (क) 'इह' अस्माकं हृदि पुनः 'आभुवः' विराजस्व, ध्यानादिभिः प्रकाशितो भव।

**निरुक्तम्।** कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातृरपोऽगम उपशाम्यन्न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत्सन्निह भवसि जायमानः ॥ ४।१४।१ ॥

## अथ दशमी।

कण्व ऋषिः। द्वे मानवे सामनी, मनुर्ऋषिः ( मानवे द्वे। आ० ब्रा० ) बृहती। अग्निः। विनियोगस्तु प्रातरनुवाके।

र २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
**नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते। दीदेथ**
१ २ ३ १ ३ १र २र ३ १ २ ३ १ २
**कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥५४॥ (ख)**

**पदपाठः।** नि अ०। त्वाम् २। अग्ने सं०। मनुः १। दधे क्रि०। ज्योतिः २। जनाय ४। शश्वते ४। दीदेथ क्रि०। कण्वे ७। ऋतजातः १। उक्षितः १। यम् २। नमस्यन्ति क्रि०। कृष्टयः १।

**अन्वयः।** [हे] अग्ने! मनुः ज्योतिः त्वां शश्वते जनाय निदधे; [त्वम्] ऋतजातः उक्षितः [सन्] कण्वे दीदेथ; यं [त्वां] कृष्टयः नमस्यन्ति।

**भाष्यम्।** हे 'अग्ने' यज्ञाग्ने! परमात्मन्! वा 'मनुः' मननशीलः ऋत्विगादिर्मुनिरनुष्ठितयोगाङ्ग इति वा 'ज्योतिः' सर्वस्य प्रकाशभूतं ज्योतीरूपं त्वां 'शश्वते' बहुविधाय 'जनाय' यजमानाय उपासकाय वा तदीप्सितफलप्राप्तेः तद्यज्ञसम्पादनाय च, 'निदधे' वेद्यां स्थापितवान्, तस्योपासकस्य अन्तरात्मनि उपदेशेन

(क) 'तद्दूरे तदन्तिके' य०, ४०।५॥ (ख) ऋ० १।३।११।

स्थापितवान्, प्रकाशितवान्। त्वम् 'ऋतजातः' यज्ञार्थमुत्पन्नः सत्यज्ञानेन साक्षात्कृतो वा 'उक्षितः' हविर्भिस्तृप्तः, उपासनया प्रसन्नो वा महान् वा सन् 'कण्वे' मेधाविनि प्राप्तज्ञाने 'दीदेथ' दीप्तवानसि, तस्य मनसि स्वप्रकाशेन दीप्तो भवसीति, 'यं' तथाविधं त्वां 'कृष्टयः' सर्वे मनुष्याः गृहैश्वर्य्यमोक्षकामाः 'नमस्यन्ति' नमस्कुर्व्वन्ति, हविर्दानादिना तर्पयन्ति उपासते वा ॥

**निरुक्तम्।** मनुर्मननात् ॥ १२।३३।४ ॥ शश्वदिति बहुनाम ॥ ३।१३।१ ॥ उक्षितो महन्नाम ॥ ३।१३।५ ॥ कण्वो मेधाविनाम ॥ ३।१८।२ ॥

## अथ व्याकरणम्।

अग्निः ( ४८, ४९, ५१ )—।

अग्निम् ( ४५, ४७, ४९, ४९ )—।

अग्ने ( ५०, ५४ )—।

अजगन् ( ५३ )—'गम्लृ' गतौ धातौ लुङि मध्यम पुरुषे सिपि 'बहुलं छन्दसि' २।४।७३ इति शपः श्लुः, हल्ङ्यादिना सिलोपः 'मोनोधातोः' ८।२।६४ इति नत्वम्।

अतन्द्रः ( ४६ )—तन्द्रा—तत् राति, तत्पूर्वाद्रातेरातोनुपसर्गेकः, टाप्। तत् द्राति वा, 'द्रा' कुत्सायां गतौ ( पलायने ) अ० प० अनि० धातोः तदो नान्तत्वं निपात्यते। यद्वा 'तन्द्रि' सौत्रो धातुः + कः + टाप्। नास्ति तन्द्रा यस्य सः। १मा १व० ॥

अदर्शि ( ४७ ) दृश् लुङ् कर्मणि।

अध ( ५२ )—न + धृ + अच् = अधर + असि, रलोपः, अव्ययसंज्ञा।

अधवा ( ५२ )—अथवा।

अधि ( ५२ )—[१द] अव्ययम्।

अध्वरे ( ४८, ५० )—[२द] ७मी १व०।

अनु ( ५१ )—अनप्राणने आहुलकादुः। सामीप्यार्थेऽव्ययम्।

अपः ( ५३ )—[२द] २या।

अप्नतम् ( ४५ )—[४द] २या।

अया ( ५२ )—अनयेत्यत्र छान्दसत्वादनादेशाभावः।

अरतिम् ( ४५ )—ऋच्छति गच्छतीति 'वहिवस्यर्त्तिभ्यश्चित्' उ० ४।६० इत्यतिः। यद्वा अर्यते इति 'अर्त्तेश्च' उ० ५।७ इत्यतिः। तम् २या १व०।

अर्य्यमा ( ५० )—इयर्तीति अर्यः। 'श्वनुचन्' उ० १।१५९ इति अर्यपूर्वान्माङः कनिन्निपातितः। अर्यं स्वामिनं मिमीते मन्यते जानातीत्यर्यमा, आकारलोपः। १मा १व०।

अवः ( ४८ )—अव रक्षणादिषु भ्वा०ऽसुन्। २या।

अवसे ( ४९ )—अव + असे 'तुमर्थे से-सेन्-असे०' ३।४।९ इति।

आत् ( ४६ )—[२द] अव्ययम्।

आदधुः ( ४७ )—आ + धाधातो लिटि प्रथम पु० बहु०।

आभुवः ( ५३ )—आ + भू + लेट् सिप् अडागमः।

आर्यस्य ( ४७ )—अर्त्तुं योग्यः, अर्यते वा, 'ऋहलोर्ण्यत्' ३।१।१२४ इति ण्यत्, तस्य।

आसीदतु ( ५० )—आ + षद्लृधातोर्लोटि प्रथम पु० १व०।

आहुवे ( ४५ )—[२द] क्रिया।

इत् ( ४६ )—[२द] अव्ययम्।

इन्द्रः ( ५१ )—'इदि' परमैश्वर्य्ये, 'ऋजेन्द्रा०' उ० २।२८ इति रन्। इन्दति परमैश्वर्यवान् भवतीतीन्द्रः।

इन्धते ( ४६ )—इन्धी धातोर्लटि।

इह ( ५३ )—'इदमो हः' ५।३।११ इति सप्तम्यन्ताद् हप्रत्ययः, 'इदमइश्' ५।३।३ तद्धितान्तत्वात्प्रातिपदिकत्वे 'सुपो धातुप्रातिपदिकयोः' २।४।७१ इति सप्तम्या लुक् 'तद्धितश्चासर्वविभक्तिः' १।१।३८ इत्यव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' २।४।८२ इत्युत्तरस्याः सप्तम्या लुक्।

ईड़िष्व ( ४९ )—'ईड़' स्तुतौ अ० आ० से० ईट्टे, धातोर्लोटि मध्यम पु० १व०।

उ ( ४७ )—[३द] अव्ययम्।

उक्थे ( ४८ )—वच परिभाषणे अ० प० धातोः 'पातृतुदिवचि०' उ० २।७ इति थक्। उच्यते परिभाष्यते यत्तदुक्थं तस्मिन्।

उक्षितः ( ५४ )—'उक्ष सेचने' भ्वा० प० से० उक्षति, + क्तः। १मा।

उप ( ४७ )—[२द उप एमसि]

ऊर्जः ( ४५ )—[ऊर्ज्जाम् ४द] ६ष्ठी १व०।

ऋचा ( ४८ )—'ऋच' स्तुतौ तु० प० से० 'क्विब्वचिपृच्छि०' उ० २।५७ इति क्विप्। ऋचन्ति स्तुवन्ति यया सा ऋक् तया॥

ऋतजातः ( ५४ )—[ऋतं ४द] ऋतेन [जन + क्तः] जातः, ३या तत्पुरु०। १मा १व०।

एना ( ४५ )—छान्दसोऽन्वादेशेऽपि तादृशप्रयोगः, 'सुपां सुलुक्०' ७।१।३९ इति विभक्तेरा-
कारादेशः ।

कण्वे ( ५४ )—'कण' शब्दे भ्वा० प०, 'कण' निमीलने चु० प०, आभ्याम् 'अशू०' उ०
१।१५१। इति क्वन्। कणति तीव्रलक्षणं शब्दं करोति, कण्यते स्तूयते वा,
निमीलयति परान् वा स्वतेजसा, तस्मिन्।

कायमानः ( ५३ )—'चिञ्' चयने स्वा० उ०, ण्यन्तः चायि+शानच् मुक्+शप्।
'छन्दस्युभयथा' ३।४।११७ इति आर्धधातुकत्वात् 'णेरनिटि' ६।४।५१ इति
णेर्लोपः। व्यत्ययेन चस्य कः। १मा १व०। कमु कान्तौ 'कमेर्णिङ्'
३।१।३० लटः शानच्, मलोपश्छान्दसः।

कृष्टयः ( ५४ )—[२८] प्रथमा बहुव०।

गातुवित्तमः ( ४७ )—'कमिमनिजनिगा०' उ० १।७३ इति तुः। गाते गच्छतीति
गातुः। गातुं वेत्तीति क्विप्, अतिशायने तमप्। १मा १व०।

गाथाभिः ( ४९ )—'गा' स्तुतौ जु० प० अनि० जिगाति, अस्मात् 'उषि कुषि०' उ० २।४
इति थन्। गीयतेऽनया सा गाथा ताभिः।

गिरः ( ४७ )—१मा।

गिरा ( ५२ )—३या।

ग्रावाणः ( ४८ )—ग्रसते ('ग्रसु' अदने भ्वा० आ०) अन्येभ्योऽपीति डः। आवनति
('वन' सम्भक्तौ शब्दे वा भ्वा० प०) विच्। ग्रश्चासावांवा च॥ ग्रसते—
वनिप् पृषोदरादित्वात्॥ गिरति गृणाति वा ('गॄ' निगरणे शब्दे वा तु०,
क्र्या०)—वनिप् पृषो०॥ गरति ('गॄ' सेके भ्वा०)+मूलविभुजादित्वात्कः।
अवति बाहुलकात्क्विनिः। ग्रश्चासावावा च॥ ते॥

चेतिष्ठम् ( ४५ ) 'चिती' संज्ञाने भ्वा० प०+इष्ठन्। २या॥

छर्दिः (४९)—'छर्द' वमने चु० उ० 'अर्चि शुचि०' उ० २।१०८ इतीसिः। छर्दति यत्तच्छर्दिः।

जनाय (५४)—४र्थी।

जाता (४२)—जन+क्तः तानि, विभक्तेर्लुक्, जातान् वा।

ज्मः (५२)—जमतिर्गतिकर्मा निघं० २।१४, जमु अदने भ्वा० प०, 'जनी' प्रादुर्भावे दि०,
'अञ्जू' व्यक्तिम्रक्षणकान्तिगतिषु रु०, एभ्यः 'श्वनुक्षन्' उ० १।१५९ इति
परि ज्मन्निति कनिन्नन्तं सोपसर्गं निपातितं, बाहुलकात्, ३।३।१, इति निरुप-
सर्गमपि भवति। निपातनादेव कारकविशेषसिद्धिः। 'ङाबुभाभ्यामन्यतर-
स्याम्' ४।१।१३। गतौ पूर्ववदर्थः, अदन्ति वास्यां भूतानि, जातानि वा स्वकार-
णात्, जायन्ते वाऽस्या ओषधयः, व्यक्ता सर्वेषां प्रत्यक्षा नत्वाकाशादिवदव्यक्ता,
अक्ता सिक्ता भवति द्रवेण। ५मी॥

ज्योतिः (५४)—२या ॥

तत् (५३)—अव्ययम् ।

तस्थौ (५१)—तिष्ठतेर्लिटि ।

ते (५३)—६ष्ठी ।

तन्वा (५२)—'कषि चमि तनि०' उ० १।८० इति उः । तनोति कार्याणि यथा सा तनूः तया ॥

त्वम् (५३)—१मा ।

त्वा (४६)—२या ।

त्वाम् (५४)—२या ।

दिवः (५२)—५मी ।

दीदिथ (५४)—दिदेति च्छान्दसी दीप्तिकर्मा, थलि, द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' ६।१।१ इति द्विर्वचनाभावः 'अनित्य मागम शासनम्' इति वचनादिडभावः ।

दूतम् (४५)—२या ।

दूरे (५३)—दुःखनेयते प्राप्यते 'दुरीणो लोपश्च' उ० २।२० इति दुरुपधादिण् धातोरक् धातोश्च लोपः । ७मी ॥

देव (५१)—सं० ।

देवाः (४८)—१मा ।

देवेषु (४६)—७मी ।

देवैः (५०)—३या ।

देवोदासः (५१)—दिवः, दंसयति दंसति, दंस दशने चु० धातोः 'दंसेष्टनौ न आ च' उ० ५।१० इति दासः । दिवः दासः षष्ठ्या अलुक् । स एव १मा ।

न (५१, ५३)— ।

नः (४७)— ।

नचन्तु (४७)—[ ङद नृत्य ] लोट् प्रथम पु० बहु व० ।

नपातम् (४५)—नञ् पूर्वात्पते र्ण्यन्तात् णिलोपः । 'नभ्राण्नपान्न०' ६।३।७५ इति नञः प्रकृतिभावः । न पातयति, न तेन पततीति तम् ॥

नमसा (४५)—३या १व० ।

नमस्यन्ति (५४)—नमः कुर्वन्तीति 'नमो वरिव०' ३।१।१९ इति पूजार्थे क्यच् ॥

नरः (४९)—'नयतेर्डिच्च' उ० २।१०० ऋप्रत्ययस्य डित्त्वाट्टिलोपः । कार्याणि नयन्तीति नाः ते ।

नाकस्य (५१)—'पि नाका दयश्च' उ० ४।१५ इति निपातः । नयति सुखमिति नाकः (म)तस्य ।

निदधे (५४)—नि + धा + लिट् ।

निवर्त्तनम् (५३)—नि + वृतु + ल्युः, ल्युट् ।

पुरः (४८)—'पुर' अग्रगमने तु० प० से० पुरति, + असुक्, अव्ययसंज्ञा ।

पुरुमीढ (४९)—पुरुः, 'मिह' सेचने भ्वा० प० अनि० मेहति. + क्तः सम्बुद्धौ।

पृथिवीम् (५१)—२या।

पृण (५२)—'पृण' प्रीणने तु० प० से० पृणति, लोट्।

प्रमृषे (५३)—प्र + 'मृष' तितिक्षायाम् दि० उ० से०। प्रमृष्यते। व्यत्ययेन कर्मणि त-प्रत्ययः 'लोपस्त०' ७।१।४१ आत्मनेपदेषु यस्तकारस्तस्य छन्दसि लोपः स्यात्।

प्रविवावृते (५१)—प्र + वि + 'वृतु' वर्त्तने भ्वा०, वरणे दि० लिट् ववृते।

प्रातर्यावभिः (५०)—'प्रात्तितेररन्' उ० ५।५९ प्रकृष्टमतति गच्छतीति प्रातः। प्रातः यान्तीति, वनिप्, तैः।

प्रियम् (४५)—२या।

मज्मना (५१)—'टुमस्जो' शुद्धौ तु० प० अनि० धातोः 'सर्वधातुभ्यो मनिन्' उ० ४।१४५ इति मनिन्, मज्जयति शत्रूननेन तन्मज्म तेन॥

मनुः (५४)—'शॄ स्वृ स्निहि०' उ० १।१० मन्यतेऽवबुध्यते शास्त्रमिति मनुर्विद्वान्॥

ममा (५२)—ममेत्यस्य 'ढ्रलोपे पूर्वस्य०' ६।३।१११ इत्यतो दीर्घ इत्यनुवर्त्य 'अन्येषामपि०' ६।३।१३७ इति दीर्घः।

मरुतः (४८)—१मा बहुव०।

मर्त्तासः (४६)—'हसि मृ०' उ० ३।८६ इति तन्, म्रियतेऽसौ मर्त्तस्ते, जसोऽसुक्॥

मातरम् (५१)—'मान' पूजायाम् चु० प०, 'नप्तृ नेष्टृ०' उ० २।९५ मानयति सत्करोतीति मातेति निपातितं ताम्।

मातृषु (४६)—७मी।

मातुः (५३)—२या।

मित्रः (५०)—पुंसि।

यत् (५३, ५३)—अव्ययम्।

यम् (५४)—२या।

यस्मिन् (४७)—७मी।

यामि (४८)—याचामि (आर्षः) वर्णलोपः। यद्वा यामि याञ्चाकर्मसु। नि०।

राजसि (४६)—राजृ दीप्तौ लट् सिप्।

राये (४९)—४र्थी।

रोचनात् (५२)—'रुच' दीप्तौ भ्वा० आ० 'अनुदात्तेतश्च हलादेः' ३।२।१४९ इति युच्॥ 'बहुलमन्यत्रापि' उ० २।७८ इति युज् वा। तस्मात्। नन्दादित्वाल्ल्युर्वा॥

वः (४५)—।

वना (५३)—'वन' संभक्तौ त० आ० 'पुंसि संज्ञायां घः प्रायेण' ३।३।११८॥ अज्वा॥ विभक्तेराकारादेशः॥

वनेषु (४६)—७मी ॥

वरेण्यम् (४८)—वृङ् संभक्तौ क्र्या० + एण्यः ॥ यद्वा वृञ् वरणे स्वा० 'वृञ एण्यः' उ० ३।९८ व्रियते स्वीक्रियते तत् । २या० ॥

वर्धनम् (४७)—वृधु + 'अनुदात्ते०' ३।२।१४९ इति युच् ॥ ल्युर्वा ॥ २या ॥

वर्धस्व (५२)—लोट् ।

बर्हिः (४८)—१मा ।

बर्हिषि (५०)—७मी ।

वहसि (४६)—वह लट् सिप् ।

वह्निभिः (५०)—वह 'वहि श्रि०' उ० ४।५१ इति नित् । वहतीति वह्निस्तैः ।

विश्वस्य (४५)— ।

बृहतः (५२)—५मी ।

व्रतानि (४७)—वृञ् स्वा० 'पृषिरञ्जिभ्यां कित्' उ० ३।१११ इति विधीयमानोऽतच् प्रत्ययो बाहुलकाद् भवति, कित्त्वाद्गुणाभावः, यणादेशः । वारयतेर्वा तत् इत्यत्र 'लुग्०' ७।३।७३ इति लुगपि बाहुलकात् । तानि ॥

ब्रह्मणस्पते (४८)—'बृहि' वृद्धौ भ्वा० 'बृंहेर्नोच्च' उ० ४।१४६ इति मनिन् । बृंहति वर्द्धयति प्रजाः । अन्तर्भावितण्यर्थः । ब्रह्मणः पतिः (षष्ठ्यन्तः) 'षष्ठ्याः पति०' ८।३।५३ इति विसर्गस्य सः । संबुद्धौ ॥

शर्माणि (५१)—'शॄ' हिंसायाम् क्र्या० उ० अनि०, 'सर्वधातुभ्यो मनिन्' उ० ४।१४५, शृणातीति शर्म तस्मिन् ॥

शश्वते (५४)—शशति शशनं वा 'शश' प्लुतगतौ भ्वा० बाहुलकात् वत् सहार्थे ।

शीरशोचिषम् (४९)—शेते इति शीरं ( 'शीङ्' स्वप्ने 'स्फायि तञ्चि०' उ० २।१३ इति रक् ) शोचिरस्य तम् ।

शेषे (४६)—शीङ् लट् से ।

श्रुतम् (४९)—श्रु + क्तः तम् ।

श्रुत्कर्ण (५०)—शृणोतीति श्रुत् क्विपि तुगागमः, कीर्यते शब्दग्रहणाय क्षिप्यते, यद्वा कीर्यते शब्दोऽस्मिन्, किरति शरीरे सुखं वा 'कृ' विक्षेपे 'कृ वृ जॄ०, उ० ३।१० इति नन् । बाहुलकाद्गुणः । यद्वा कर्णयति 'कर्ण' भेदने अदन्तः, अच् । यद्वा करोति शब्दतानं कृ करणे + नन् । श्रुतौ कर्णौ यस्यासौ तत्संबुद्धौ ॥

श्रुधि (५०)—३द ।

सन् (४६, ५३) —अस + शतृ: शतुरुगित्वान्नुम् १मा ।

सुजातम् (४७)—सु + जन + क्तः 'सुञः' ८।३।१०७ षत्वम् ।

सम् (४६)—सम्यगर्थेऽव्ययम् ।

सयावभिः (५०)—समानं यान्तीति 'या' प्रापणे 'आतो मनिन्०' ३।२।७४ इति वनिप् । तैः ।

सुक्रतो (५२)—[१८] सम्बुद्धौ ।

सुदीतये (४९)—'दा' दाने जु० + क्तिन् 'घुमास्था०' ६।४।६६ इतीत्त्वं दीतिः । सुष्ठु दीतिर्दानं यस्य तस्मै । सुदीप्तये, पलोपः ।

स्वध्वरम् (४५)—सु सुष्ठु अध्वरो यज्ञो यस्य तम्, २या ।

हव्यम् (४६)—२या ।

हविष्कृतः (४६)—६ष्ठी । जुहोतेः 'अर्चिशुचि०' उ० २।१०८ इति इसिः । हविः पूर्वात्करोतेः क्विप् । 'इसुसोः सामर्थ्ये' ८।३।४४ इति षत्वम् ।

हितः (४८)—[१८] ।

इति चतुर्थी दशतिश्चतुर्थखण्डश्च ।

---

प्रथमम् ( आग्नेयं ) पर्व । प्रथमोऽध्यायः । प्रथमः प्रपाठकः । षष्ठः खण्डः । षष्ठी दशतिः ।

## अथ प्रथमा ।

वसिष्ठ ऋषिः । एकं सामाग्नेः स्वभूतं द्रविणशब्दोपेतम् ( अग्नेश्च द्रविणम् । आ० ब्रा० ) बृहती । अग्निः । विनियोगस्तु ( देवो वो द्रविणोदा इत्यग्निष्टोमसाम कार्यं देवतास्वेवैनान् प्रतिष्ठापयति । ता० म० ब्रा० १७।११।१० ) अग्निष्टोमे सामनि ; ( स उत्तमे स्तोत्रे देवो वो द्रविणोदा इति देवानभिपर्यावर्त्तत ॥ १८।१४ ॥ ) ।

३ १ २ ३ २ ३ १ २ ३ १ २ १ २

देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् । उद्वा

३ २ ३ १ २ ३ २र १र ३ १ २

सिञ्चध्व मुप वा पृणध्व मादिद्वो देव ओहते ॥५५॥ (क)

---

(क) ऋ० ५।२।२२ ।

**पदपाठः ।** देवः १। वः ६। द्रविणोदाः १। पूर्णाम् २। विवष्टु क्रि०। आसिचम् २। उत्, वा अ०। सिञ्चध्वम् क्रि०। उप, वा अ०। पृणध्वम् क्रि०। आत्, इत्, अ०। वः २। देवः १। ओहते क्रि०।

**अन्वयः ।** द्रविणोदाः देवः वः पूर्णाम् आसिचं विवष्टु, [ हे मनुष्याः यूयम् ] उत्सिञ्चध्वं वा उपपृणध्वं वा [ तदग्नये प्रयच्छत च ] आत् इत् देवः वः ओहते।

**भाष्यम् ।** 'द्रविणोदाः' 'देवः' धनदाता देवोऽग्निः, परमात्मा वा 'वः' युष्मदीयां 'पूर्णां' हविषा, ध्यानधारणासमाधिरूपहविषा वा परिपूर्णाम् 'आसिचं' घृतेनासिक्तां स्रुचमाहुतिरूपां स्तुतिं वा 'विवष्टु' विवष्टि कामयते। हे मनुष्याः! यूयम् 'उत्सिञ्चध्वं वा' सोममुत्कृष्टं सिञ्चत 'उपपृणध्वं वा' सोमेनाज्येन च चमसं पूरयत, तदग्नये प्रयच्छत च; उत्कृष्टं ध्यायत वा परमात्मानं, स्वकामनां भोगापवर्गरूपां पूरयत वा तत्प्रसादेनेतिशेषः। 'आत् इत्' अनन्तरमेव 'देवः' दिव्योऽग्निः परमात्मा वा 'वः' युष्मान् यजनशीलान् 'ओहते' वहति परमानन्दं प्रापयतीत्यर्थः।

**निरुक्तम् ।** द्रविणोदाः कस्मात्? धनं द्रविणमुच्यते यदेन-दभिद्रवन्ति। बलं वा द्रविणं यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः॥ ८।१।१॥ तस्यो द्रविणोदाः इन्द्र इति क्रौष्टुकिः। स बल-धनयोर्दातृतमस्तस्य च सर्वा बलकृतिः। ८।२।१॥ अयमेवाग्निर्द्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति। 'देवा अग्निं धारयन् द्रविणोदाम्' इत्यपि निगमो भवति॥ ८।२।६॥ विशेषस्त्वत्रैव द्रष्टव्यः।

## अथ द्वितीया ।

कण्व ऋषिः। बार्हस्पत्यं साम बृहस्पतिर्ऋषिः ( बार्हस्पत्यञ्च। आ० ब्रा० ) बृहती। ब्रह्मणस्पतिर्देवता। विनियोगस्तु अग्नि-षोमीयप्रणयने।

२ ३ १ २ ३ २ ३ २ क २र ३ १ २ १ २ ३ १ र
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं
२र ३ १ २ ३ २ ३ १ २
नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः॥ ५६ ॥ (क)

**पदपाठः** । प्रैतु क्रि०। ब्रह्मणस्पतिः १। प्र अ०। देवी १। एतु क्रि०। सूनृता १। अच्छा अ०। वीरम् २। नर्यम् २। पङ्क्तिराधसम् २। देवाः १। यज्ञम् २। नयन्तु क्रि०। नः २।

**अन्वयः** । ब्रह्मणस्पतिः प्रैतु, सूनृता देवी प्र एतु, देवाः वीरं नर्यं पङ्क्तिराधसं यज्ञं नः अच्छा नयन्तु ।

**भाष्यम्** । 'ब्रह्मणस्पतिः' अन्नपतिर्धनस्वामी वेदपतिर्वेश्वरः 'प्रैतु' अस्मान् प्रकर्षेण प्राप्नोतु, 'सूनृता' 'देवी' सुष्टुनेत्री दिव्यगुणवती वेदवाणी 'प्र' प्रकर्षेण 'एतु' अस्मान् प्राप्नोतु, 'देवाः' ऋत्विगादयो विद्वांसः [ विद्वांसो हि देवाः। श० ब्रा० ३।५।६।१० ] दिव्यगुणा ईश्वरस्य 'वीरं' पूर्णशरीरात्मबलप्रदं 'नर्यं' नराणां हितकरं 'पङ्क्तिराधसं' पङ्क्त्यर्थं जनसमूहार्थं राधोऽन्नं धनं वा यस्य तं धर्मात्मवीरमनुष्यसमूहानां कल्याणं राध्नोति साध्नोति यस्तं वा 'यज्ञं' यागादिकं कर्म 'नः' अस्मान् 'अच्छा' नयन्तु अभिमुख्येन नयन्तु कृपया प्रापयन्त्विति ।'

**निरुक्तम्** । नर्यो मनुष्यो नृभ्यो हितो नारापत्यमिति वा ॥ ११।२६।१ ॥

## अथ तृतीया ।

कण्व ऋषिः । वसिष्ठस्य स्वभूतं वौङ्कं साम ( वसिष्ठस्य च वौङ्कम् । बृहती । विनियोगस्तु ( वौङ्कं भवति॥ च्यवनो वै आ० ब्रा० ) दाधीचोऽश्विनोः प्रिय आसीत् सोऽजीर्यत् तमेतेन साम्नाप्सु, व्यङ्कयता

(क) ऋ० १।३।२०॥

तं पुनर्युवानमकुरुतां तद्भाव तौ तर्ह्यकामयेतां कामसनि साम वौङ्क काममेवैतेनावरुन्धे ॥ ता० म० ब्रा० १४।६।८, १० ) एतेन तुष्टुवानो यौवनबलं लभते ।

३ २ १ २ ३ २ ३ १ २ २ १र २र ३ २ ३ १र
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो
२र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वाजस्य सनिता यदञ्जिभि र्वाघद्भि र्विह्वयामहे ॥५७॥(क)

**पदपाठः ।** ऊर्ध्वः १। ऊ, सु अ०। नः ६। ऊतये ४। तिष्ठा क्रि०। देवः १। न अ०। सविता १। ऊर्ध्वः १। वाजस्य ६। सनिता १। यत् अ०। अञ्जिभिः ३। वाघद्भिः ३। विह्वयामहे क्रि०।

**अन्वयः ।** [हे अग्ने त्वं] नः सु ऊतये ऊर्ध्वः ऊ (=पाद-पूरणे) तिष्ठा। सविता देवः न ऊर्ध्वः [सन्] वाजस्य सनिता [भव] यत् अञ्जिभिः वाघद्भिः विह्वयामहे ।

**भाष्यम् ।** हे अग्ने ! परमात्मन् ! वा त्वं 'नः' अस्माकं 'सु ऊतये' सुष्ठु रक्षणाय 'ऊर्ध्वः' ज्वालाभिरुन्नतः सन् श्रेष्ठभावस्य द्योतकः सन् वा 'तिष्ठा' तिष्ठ, अवस्थितो भव । अत्र दृष्टान्तमाह, 'सविता देवः न' सूर्य्यो देव इव 'ऊर्ध्वः' उन्नतः सन् हविर्गृहीत्वा वायुना सहान्तरिक्षं गतो मेघवृष्टिरूपः सन् श्रेष्ठभावयुक्तः सन् वा 'वाजस्य' अन्नस्य 'सनिता' दाता भव। 'यत्' यस्मात्कारणात् 'अञ्जिभिः' घृताहुतिभिः स्तुतिभिर्योगाङ्गैर्वा प्रकटयद्भिः 'वाघद्भिः' ऋत्विग्भिः यजनशीलैर्वा 'विह्वयामहे' त्वां विशेषेणाह्वयामः वयमिति ।

**निरुक्तम् ।** सविता सर्वस्य प्रसविता ॥ १०।३१।३ ॥ ऊर्ध्व-उच्छ्रितो भवति ॥ ८।१५।१ ॥

(क) ऋ० १।३।२० ॥

## अथ चतुर्थी ।

सौभरि ऋषिः । एकं साम अङ्गिरःपुत्रस्य विस्रुद्रंसः ऋषः (विस्रुधंसस्याङ्गिरसस्य साम । आ० ब्रा०) बृहती । अग्निः । विनियोगस्तु प्रातरनुवाके आग्नेयक्रतौ ।

२उ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ १
**प्र यो राये निनीषति मर्त्तो यस्ते वसो दाशत् । स वीरं**
२ ३ २ ३ १ २ ३ १ २
**धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥५८॥(क)**

**पदपाठः ।** प्र अ० । यः १ । राये ४ । निनीषति क्रि० मर्त्तः १ । यः १ । ते ४ । वसो सं० । दाशत् क्रि० । सः १ । वीरम् २ । धत्ते क्रि० । अग्ने सं० । उक्थशंसिनम् २ । त्मना ३ । सहस्रपोषिणम् २ ।

**अन्वयः ।** हे वसो अग्ने ! यः राये [त्वां] प्र निनीषति यः [च] मर्त्तः ते दाशत् स त्मना उक्थशंसिनं सहस्रपोषिण वीरं धत्ते ।

**भाष्यम् ।** हे 'वसो' धनदातः अन्तर्यामिन् वा 'अग्ने' 'यः' पुरुषः 'राये' धनाय मोचयन्नाग्ने ! परमात्मन् ! वा 'यः' पुरुषः 'राये' धनाय मोचयन्नाग्ने ! परमात्मन् ! वा धनाय वा त्वां 'प्र निनीषति' प्रकर्षेण नेतुमिच्छति 'यः' च 'मर्त्तः' मनुष्यः 'ते' तुभ्यं 'दाशत्' हवींषि सर्वं वा प्रयच्छति 'सः' पुरुषः 'त्मना' आत्मना एव 'उक्थशंसिनम्' 'उक्थैर्वेदमन्त्रैः शंसति स्तौति यः तं स्वाध्यायशीलं 'सहस्रपोषिणं' बहुजनपालकं 'वीरं' पुरुषार्थिनं पुत्रं [पुत्रो वै वीरः । श० ब्रा० ३।२।४।१२] 'धत्ते' धारयति, सर्वसुखं लभत इति भावः ।

**निरुक्तम् ।** सहस्रमिति बहुनाम ॥ ३।१३।१ ॥

(क) ऋ० ८।७।१३ ॥ 'प्र यं राये निनीषसि' ॥

## अथ पञ्चमी ।

कण्व ऋषिः । ऐतवाभ्र्यं साम इतवभ्रिर्ऋषिः (ऐतवाभ्र्यञ्च । श्रौ० ब्रा०) बृहती । अग्निः । विनियोगस्तु प्रातरनुवाके आश्विनक्रतौ ।

१ २ ३१ २ ३ २ ३१ २ ३१ २ ३ २ ३ २ ३
**प्र वो यह्वं पुरूणां विशां देवयतीनाम् । अग्निꣳ सूक्तेभि-**
१ २ ३ २उ ३ २ ३१ २
**र्वचोभिर्वृणीमहे यꣳसमिदन्य इन्धते ॥ ५९ ॥ (क)**

**पदपाठः** । प्र अ० । वः ६ । यह्वम् २ । पुरूणाम् ६ । विशाम् ६ । देवयतीनाम् ६ । अग्निम् २ । सूक्तेभिः ३ । वचोभिः ३ । वृणीमहे क्रि० । यम् २ । सम् अ० । इत् अ० । अन्ये १ । इन्धते क्रि० ।

**अन्वयः** । [हे मनुष्याः !] अन्ये इत् यं समिन्धते [तं] पुरूणां देवयतीनां विशां वः [अनुग्रहाय] यह्वम् अग्निं सूक्तेभिः वचोभिः प्रवृणीमहे ।

**भाष्यम्** । हे मनुष्याः ! 'अन्ये' 'इत्' अन्येऽपि ऋत्विजः उपासका वा 'यम्' अग्निं भौतिकं, परमात्मानं वा 'समिन्धते' यज्ञवेद्यां सम्यग् दीपयन्ति, सम्यग्ध्यायन्ति वा तं 'पुरूणां' वह्वीनां 'देवयतीनाम्' आत्मनो विद्याभोगान् गुणांश्चेच्छन्तीनां 'विशां' प्रजानां 'वः' युष्माकमनुग्रहाय 'यह्वं' महान्तम् 'अग्निं' भौतिकं परमात्मानं वा 'सूक्तेभिः' 'वचोभिः' सूक्तरूपै र्वेदवाक्यैः 'प्रवृणीमहे' प्रार्थयामहे उपास्महे इति ।

**निरुक्तम्** । यह्व इति महतो नामधेयं यातश्च हूतश्च भवति ॥ ८।८।२ ॥ देवयन्तो देवान् कामयमानाः ॥ ८।१८।२ ॥

---

(क) ऋ० १।३।८॥ 'वचोभिरीमहे यं सीमिदन्य ईळते' ॥

## अथ षष्ठी ।

आश्लील ऋषिः । एकं साम मनसोदोह नामधेयकं ( मनसश्च दोहः । आ० ब्रा० ) बृहती । अग्निः । विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे ।

३ २ ३ २ ३ २ ३ २ ३ १र २र ३ १ २
**अयमग्निः सुवीर्य्यस्येशे हि सौभगस्य । राय ईशे**
३ १ २ ३ १ २ ३ १ २ ३ १ २
**स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ ६० ॥ (क)**

**पदपाठः ।** अयम् १ । अग्निः १ । सुवीर्य्यस्य ६ । ईशे क्रि० । हि अ० । सौभगस्य ६ । रायः ६ । ईशे क्रि० । स्वपत्यस्य ६ । गोमतः ६ । ईशे क्रि० । वृत्रहथानाम् ६ ॥

**अन्वयः ।** अयम् हि अग्निः सुवीर्य्यस्य सौभगस्य [च] ईशे, रायः स्वपत्यस्य [च] ईशे, गोमतः वृत्रहथानां [च] ईशे ।

**भाष्यम् ।** 'अयं' प्रत्यक्षः हृद्देशेऽनुभूयमानो वा 'हि' 'अग्निः' भौतिकः परमात्मा वा 'सुवीर्य्यस्य' शोभनसामर्थ्यस्य 'सौभगस्य' शोभनो भगः श्रीर्यस्य स सुभगः—तस्यभावः सौभगं तस्य सुभगत्वस्य सौभाग्यस्य च 'ईशे' ईष्टे, 'रायः' धनस्य 'स्वपत्यस्य' शोभनापत्यस्य 'गोमतः' गवादिपशुमत्त्वस्य ब्रह्मवर्चसो वा 'ईशे' ईष्टे अधिकारित्वेन वर्त्तसे । तथा 'वृत्रहथानां' वृत्राणामावरकाणां रोगपापविघ्नानां हथा वधास्तेषां शत्रुभूतरोगपाप विघ्नविनाशानाम् 'ईशे' ईष्टे स्वामी, निवारको भवति ।

**निरुक्तम् ।** अपत्यं कस्मात् ? अपततं भवति । नानेन पततीति वा ॥ ३।१।४ ॥

(क) ऋ० ३।१।१६ ॥

## अथ सप्तमी ।

वसिष्ठ ऋषिः । त्रीणि सामानि समन्त-नामधेयानि, तेषामेकस्य साम्नोऽग्निर्वसिष्ठो वा ऋषि र्वरुणो वा द्वयो र्वाम्रो नाम ऋषिः (समन्तानि त्रीण्यग्नेरेकं वसिष्ठस्य वा वरुणस्य द्वे वाम्रस्य च । आ० ब्रा०) विनियोगस्त्वाग्नेयक्रतौ प्रातरनुवाके आश्विनशस्त्रे ।

१ २ ३ १ २ ३ १र २र ३ १ १र २र
**त्वमग्ने गृहपतिस्त्वꣳहोता नो अध्वरे । त्वं पोता**
३ १ २ ३ २ ३ १ २ ३ १
**विश्ववार प्रचेता यक्षि यासि च वार्य्यम् ॥ ६१ ॥ (क)**

**पदपाठः** । त्वम् १ । अग्ने सं० । गृहपतिः १ । त्वम् १ । होता १ । नः ६ । अध्वरे ७ । त्वम् १ । पोता १ । विश्ववार सं० । प्रचेताः १ । यक्षि क्रि० । यासि क्रि० । च अ० । वार्य्यम् २ ।

**अन्वयः** । [हे] अग्ने ! नः अध्वरे त्वं गृहपतिः, त्वं होता, त्वं पोता, प्रचेताः [ चासि ] [हे] विश्ववार ! [त्वं] यक्षि वार्यं [हविः] यासि च ।

**भाष्यम्** । हे 'अग्ने' यज्ञाग्ने ! परमात्मन् ! वा 'नः' अस्माकम् 'अध्वरे' हिंसारहिते कर्म्मयज्ञे, ज्ञानयज्ञे वा 'त्वं' गृहपतिः' यजमानः, शरीररूपगृहस्य पालको वा 'त्वं' 'होता' ऋत्विग्विशेषः ऋग्वदीयः, कर्म्मफलप्रदाता वा 'त्वं' 'पोता' सामवेदीय ऋत्विग्विशेषः, पवित्रकर्त्ता वा 'प्रचेताः' प्रवृद्धचेताः प्रकृष्टमतिः ब्रह्मा चतुर्वेदज्ञः सर्वकार्यपरिदर्शकः ऋत्विग्विशेषः, सर्वकार्यद्रष्टा वा चासि। हे 'विश्ववार' विश्वैः सर्वैं वरणीय ! त्वं 'यक्षि' यजसि सङ्गच्छसे वा 'वार्यं' वरणीयं हविः कर्मफलं वा 'यासि' प्रापयसि देवेभ्यो मनुष्येभ्य-इति वा ।

**निरुक्तम्** । प्रचेतसः प्रवृद्धचेतसः ॥ ८।२०।१ । वार्य्यं वृणोतेरथापि वरतमम् ॥ ५।१।४ ॥

(क) ऋ० ५।२।२१ ॥ 'यक्षि वेषि च' ॥

## अथाष्टमी ।

विश्वामित्र ऋषिः । एकं साम वैखानस ऋषिः दनुपुत्र आङ्गिरो वा ( वैखानसस्य सामाङ्गिरस्य वा दानवस्य । आ० ब्रा० ) बृहती । अग्निः । विनियोगस्त्वाग्नेयक्रतौ प्रातरनुवाके आश्विनशस्त्रे च ।

१ २ ३ १ २र ३ १ २ ३ १ २र
**सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये । अपान्नपातꣳ**

३ १ २ ३ १ ३ १ २ ३ १ २
**सुभगꣳ सुदꣳससꣳ सुप्रतूर्त्तिमनेहसम् ॥६२॥ (क)**

**पदपाठः ।** सखायः १ । त्वा २ । ववृमहे क्रि० । देवम् २ । मर्त्तासः १ । ऊतये ४ । अपाम् ६ । नपातम् २ । सुभगम् २ । सुदंससम् २ । सुप्रतूर्त्तिम् २ । अनेहसम् २ ।

**अन्वयः ।** [हे अग्ने !] सखायः मर्त्तासः [वयम्] ऊतये देवम् अपां नपातं सुभगं सुदंससं सुप्रतूर्त्तिम् अनेहसं त्वा ववृमहे ।

**भाष्यम् ।** हे अग्ने ! भौतिक ! परमात्मन् ! वा 'सखायः' सुहृद्भूताः सोमाज्यादिहविष्प्रदानेन, ध्यानादिना वा 'मर्त्तासः' मनुष्याः वयम् 'ऊतये' अस्माकं रक्षणाय 'देवं' दिव्यगुणम् 'अपां' कर्म्मणां 'नपातं' न पातयितारं रक्षकं 'सुभगं' शोभनैश्वर्य्यं 'सुदंससं' सुकर्म्माणं 'सुप्रतूर्त्तिं' शोभनतारकम् 'अनेहसम्' उपद्रवरहितं 'त्वा' त्वां 'ववृमहे' वृणीमहे ।

**निरुक्तम् ।** दंस इति कर्म्मनाम ॥ २।१।१ ॥ एह इति क्रोधनाम ॥ २।८।१३ ॥

---

(क) ऋ० ३।९।५ ॥ 'सुभगं सुदीदितिम्' ॥

# अथ व्याकरणम् ।

अनेहसम् (६२)—'हन' अ० धातोः 'नञि हन एह च' उ० ४।२२४ इत्यसिः। न न्यते विच्छिन्नो न भवतीत्यनेहास्तम् २या १व०।

अन्ये (५९)—'अन' अ०, अग्न्यादित्वाद्यः, ते १मा बहु व०।

आसिचम् (५५)—आ + 'षिच्' चरणे तु० उ० अनि०, + क्विप्। आसिचन्ति अनया ताम् २या १व०।

ईशे (६०, ६०, ६०)—'ईश' ऐश्वर्ये अ० आ० से० ईष्टे। व्यत्ययेन प्रथम पुरुष १व० स्थाने उत्तमैकवचनम्।

उक्थशंसिनम् (५८)—उक्थैः (५८) शंसतेऽसौ इन्, तम्।

उत्सिचध्वम् (५५)—उत् + 'षिच्' लोट् मध्यम पु० बहुव०।

उपपृणध्वम् (५५)—उप + पृण तु० प० से० पृणति, व्यत्ययेनात्मनेपदं लोट् ध्वम्।

ऊर्द्ध्वः (५७, ५७)—उद् (ऊर) हा जु० ड्व। १मा।

ओहते (५५)—आ + ऊह वितर्के भ्वा० आ० से० अनेकार्थत्वात् साधुः।

गोमतः (६०)—अस्त्यर्थे मतुप्। 'अधीगर्थदयेशां कर्म्मणि' २।३।५२ इति षष्ठी।

तिष्ठा (५७)—तिष्ठते लोटि द्व्यचोऽतस्तिङ इति दीर्घः।

त्मना (५८)—आत्मनेति तृतीयैकवचनान्तस्य 'मन्त्रेष्वाङ्यादेरात्मनः' ६।४।१४१ इत्याकार-लोपः।

दाशत् (५८)—'दाश' दाने + लेट् + तिप्।

देवयतीनाम् (५९)—देवानात्मन इच्छन्त्यो देवयन्त्यः 'सुप आत्मनः क्यच्' ३।१।८ इति क्यच्, शतः 'उगितश्च' ४।१।६ ङीप्। तासाम्।

द्रविणोदाः (५५)—द्रविणं ददातीति सकार उपजनः, ददाते रसुनि बाहुलकादाकारलोपः।

नर्य्यम् (५६)—नरेभ्यो हितं 'तस्मै हितम्' ५।१।५ इति यत्। २या।

पङ्क्तिराधसम् (५६)—'पचि' व्यक्तीकरणे भ्वा० आ० से पञ्चते, विस्तारवचने चु० पञ्चयति, आभ्यां 'पङ्क्तिविंशति०' ५।१।५९ इति 'तदस्य परिमाणम्' ५।१।५७ इति विषये तिप् प्रत्ययो निपात्यते, प्रकृतेः पञ्चन् शब्दस्य टिलोपः, 'चोः कुः' ८।२।३० इति कुत्वं ; राधः [४८] ; पङ्क्त्यर्थं राधोऽन्नं धनं वा यस्य तम्। यद्वा पङ्क्तीनां धर्म्मात्मवीरमनुष्यसमूहानां कल्याणं राध्नोति यस्तम्।

पूर्णाम् (५५)—'पूरी' आप्यायने (प्रीणने) दि० आ० से० पूर्यते, कर्त्तरि कर्म्मणि वा क्तः 'वा दान्तशान्तपूर्ण०' ७।२।२७ इति। टाप्। २या १व०।

पोता (६१)—पुनातीति पूञ पवने तृच् 'नप्तृनेष्टृत्वष्टृहोतृपोतृ०' उ० इति साधुः। यद्वा 'तृन्विधावृत्विक्षु चानुपसर्गस्य' वा० ३।२।१३५ इति तृन्। ऋत्विग्विशेषः।

प्रचेताः (६१)—प्रकृष्टं चेतोऽस्य। प्रचेतयति वा। 'चिती' संज्ञाने भ्वा० प० असुन्।

प्रनिनीषति (५८)—प्र + नीञ् + सन्।

यक्षि (६१)—यजे र्लोटि सिपि 'बहुलं छन्दसि' २।४।७३ इति शपो लुक् 'व्रश्च०' ८।२।३६ इति षत्वं 'षढोः कः सि' ८।२।४१ इति कत्वं सेर्हिरादेशश्छान्दसत्वान्न भवति।

यह्वम् (५९)—यान्त्यनेन। 'या' प्रापणे 'शेवयह्व०' उ० १।१५४ इति वन् धातोर्ह्रस्वो हुगागमश्च॥ यद्वा यजतेः पूर्ववद् वन् जकारस्य हकारश्च निपात्यते॥ यद्वा याते र्ह्वयतेश्च 'गेहे कः' ३।१।१४४ इति बाहुलकाद् भूते कप्रत्ययो ह्वयतेः सम्प्रसारणञ्च॥ २या॥

वचोभिः (५९)—'वच' परिभाषणे अ० सर्वधातुभ्योऽसुन्नित्यसुन्। नपुं०। ३या बहु व०।

वव्महे (६२)—वृङ् सम्भक्तौ क्र्या० लिट् उत्तम बहुव०।

वा (५५, ५५)—'वा' गतिगन्धनयोः अ० प० क्विप्। अव्ययम्।

वार्यम् (६१)—'वृङ्' सम्भक्तौ क्र्या० आ० 'ऋहलोर्ण्यत्' ३।१।१२४ कर्मणि। २या।

विवष्टु (५५)—'वश' कान्तौ अ० प०—तिप्, शप्, शप्—श्लुः, द्वित्वं, 'बहुलं छन्दसि' ७।४।७८ इत्यभ्यासे इकारः, शस्थाने ष् 'व्रश्च भ्रस्ज०' ८।२।३६ इति, तस्थाने टः सन्धिः, 'एरुः' ३।४।८६ इति लोट इकारस्य उः। विवष्टु। लकारव्यत्ययः। विवष्टि कामयते।

विश्ववार (६१)—'वृञ्' वरणे स्वा० वारयति व्रियते वा पचाद्यच् घञ् वा॥ यद्वा वार्यते आच्छाद्यतेऽनेन वृञ चुरादिः 'पुंसि संज्ञायां घः०' ३।३।११८ इति घः॥ विश्वैः सर्वैः वारो वरणीयो यः तत्सम्बुद्धावेकवचने।

वीरम् (५६, ५८)—(सुवीरं ३द) २या।

वृत्रहथानाम् (६०)—'हनि कुशि०' उ० २।२ इति क्थन्। हननं हथः। वृत्राणां [१द] हथ इति वृत्रहथस्तेषाम्।

सखायः (६२)—'ख्या' प्रकथने अ० प० अनि०। 'समाने ख्यः०' उ० ४।१३७ इति इन् ङित् च। ङित्त्वाट्टिलोपः। समानं ख्यातीति सखा। १मा बहु व०।

सनिता (५७)—'षणु' दाने त० तृच्।

सविता (५७)—'षु' प्रसवैश्वर्ययोः भ्वा० प०। तृचि 'स्वरति सूति०' ७।२।४४ इति इट्।

सहस्रपोषिणम् (५८)—सहस्रं पुष्णातीति तम्।

सुदंससम् (६२)—सुष्ठु दंसः कर्म यस्य तम्।

सूनृता (५६)—सु + 'ऊन' परिहाणे दि० आ० + क्विप्। ऋतमिति सत्यनाम। सून तदृतञ्च सूनृतं, पृषोदरादित्वान्नलोपाभावः, टाप्॥ यद्वा सुष्ठु नृत्यत्यनेन।

नृती गात्रविक्षेपे दि० प०। घञर्थे कः। अन्येषामपीति दीर्घः, टाप्। १मा।

सुप्रतूर्त्तिम् (६२)—'तुरी' गतित्वरणहिंसनयोः दि० आ०—क्तिन् तूर्त्तिः। शोभनं प्रकृष्टं च तूर्त्तिर्यस्य तम्।

सुभगम् (६२)—शोभनो भगः श्री यस्य तम्। सु+भज सेवायाम् 'पुंसि संज्ञायां घः०' ३।३ ११८ इति 'खनो घ च' ३।३।१२५ इति यित्करणाद्वा घः॥ २या॥

सुवीर्य्यस्य (६०)—शोभनं वीर्य्यं कर्मधा० तस्य।

सूक्तेभिः (५९)—सु+वच+क्तः। 'बहुलं छन्दसि' ७।१।१० इति भिस ऐसभावः।

सौभगस्य (६०)—सुभगस्य भावः 'प्राणभृज्जा०' ५।१।१२९ इत्यञ् 'हृद्भग०' ७।३।१९ इति वृद्धिः। सर्वविधीनां छन्दसि विकल्पितत्वादित्युत्तरपदस्य वृद्धिर्न। ६ष्ठी।

स्वपत्यस्य (६०)—शोभनमपत्यं तस्य।

इति षष्ठी दशतिः षष्ठः खण्डश्च।

---

प्रथमम् (आग्नेयं) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। सप्तमः खण्डः। सप्तमो दशतिः।

## अथ प्रथमा।

आत्रेयः श्यावाश्वः गौतमो वामदेव ऋषिर्वा। श्यावाश्वं साम श्यावाश्वेन ऋषिणा दृष्टं (श्यावाश्वञ्च। आ० ब्रा०) त्रिष्टुप्छन्दः (क)। अग्निर्देवता। उत्तरवेद्यामग्निस्थापनादावेतन्मूलकसाम्नो विनियोगः।

---

(क) त्रिष्टुभो रुद्राः। पि० छ० सू० ३।६॥ त्रैष्टुभः पादः सर्वत्रैकादशाक्षरः।

१ २ ३ १ २ ३ १र २र ३ १ २
आजुहोता हविषा मर्जयध्वं, नि होतारं गृहपतिं दधिध्वम्।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ २ ३क २र
इड़स्पदे नमसा रातहव्यं, सपर्यता यजतं पस्त्यानाम्॥६३

**पदपाठः**। आ अ०। जुहोता क्रि०। हविषा ३। मर्जयध्वम् क्रि०। नि अ०। होतारम् २। गृहपतिम् २। दधिध्वम् क्रि०। इडः ६। पदे ७। नमसा ३। रातहव्यम् २। सपर्यता क्रि०। यजतम् २। पस्त्यानाम् ६।

**अन्वयः**। [हे ऋत्विजः! यूयम् अग्निम्] आजुहोता [किञ्च] हविषा मर्जयध्वम्, इड़ः पदे होतारं गृहपतिम् [अग्निं] निदधिध्वम्, [अपि च] नमसा [सह] रातहव्यं यजतं [तं] पस्त्यानां [मध्ये] सपर्यता।

**आधियाज्ञिकम्**। हे ऋत्विजः! यूयम् अग्निम् 'आ जुहोता' सम्यगादधिध्वं, किञ्च 'हविषा' हवनीयेन द्रव्येण 'मर्जयध्वं' मृड़यध्वं, सुखयध्वम्। 'इड़ः' इड़ायाः पृथिव्याः 'पदे' अधिष्ठाने उत्तरवेद्यामिति 'होतारं' साधु देवानामाह्वातारं 'गृहपतिं' गार्हपत्य-नामकं, प्रतिदिनं देवयज्ञेन हुतः सन् यजमानगृहं यो रक्षति तम् अग्निं 'निदधिध्वं' नितरामाहितं कुरुध्वम्, अपि च 'नमसा' नमस्कारेणान्नेन वा सह 'रातहव्यं' रातं दत्तं हव्यं हवि र्यस्मै तं 'यजतं' सङ्गमनीयं तं 'पस्त्यानां यज्ञगृहाणां मध्ये 'सपर्यता' परिचरत, सेवत।

**आध्यात्मिकम्**। हे उपासकाः! यूयमग्निं परमात्मानम् 'आजुहोता' सम्यगुपासीध्वं, किञ्च 'हविषा' यज्ञादिना ध्यानेन वा 'मर्जयध्वं' मृड़यध्वं, सुखयध्वं, प्रसादयत। 'इड़ः' इड़ायाः प्रशस्तस्या वाचः 'पदे' स्थाने वेदवाचि, हृद्देशे वा 'होतारं' सुखस्य दातारं 'गृह-पतिं' गृहस्य, सर्वजगतः पतिं स्वामिनं परमात्मानं 'निदधिध्वं' नितरां

ध्यायत, अपि च 'नमसा' नमस्कारेण सह 'रातहव्यं' रातं दत्तं हव्यं पूजादिकं यस्मै तं 'यजतं' सङ्गमनीयं तं 'पस्त्यानां ब्रह्मगृहाणां शरीराणामिति (क) मध्ये 'सपर्यता' परिचरत, सेवत ।

**निरुक्तम्** । इड़ेति पृथिवीनाम ॥ २।५।२ ॥ इड़ेति वाङ्नाम ॥ २।२३।१ ॥ पादः पद्यतेः । तन्निधानात्पदम् ॥ २।७।१ ॥ सपर्यतीति परिचरणकर्म्मा ॥ ३।१३।१० ॥ पस्त्यमिति गृहनाम ॥ ३।१३।८ ॥

## अथ द्वितीया ।

वार्ष्टहव्य उपस्तुत ऋषिः । द्वे सामनी ऋतुर्नामके ( ऋतुषामणी च । आ० ब्रा० ) जगती छन्दः (ख) । अग्निः । प्रातरनुवाके आश्विनशस्त्रे च विनियोगः ।

३ २उ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २ ३
**चित्र इच्छिशोस्तरुणस्य वक्षथो, न यो मातरावन्वेति**
१ २ ३ १र २र ३ १ २ ३ १ ३ १ २ ३ १
**धातवे । अनूधा यदजीजनदधा चिदा, ववक्षत् सद्यो**
२र ३ २ १ २
**महि दूत्यं चरन् ॥ ६४ ॥ (ग)**

**पदपाठः** । चित्रः १ । इत् अ० । शिशोः ६ । तरुणस्य ६ । वक्षथः १ । न अ० । यः १ । मातरौ २ । अन्वेति क्रि० । धातवे अ० । अनूधाः १ । यत् अ० । अजीजनत् क्रि० । अधा अ० । चित् अ० । आ ववक्षत् क्रि० । सद्यः अ० । महि २ । दूत्यम् २ । चरन् १ ।

---

(क) स एष गिरि श्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते । ऐतरेयारण्यके अ १ खं ८ ।

(ख) जगत्या आदित्याः ॥ पि० छ० ३।४ ॥ जगत्याः पादो द्वादशाक्षराणि भवन्ति ।

(ग) ऋ० ८।६।१८ ॥ 'मातरावप्येति' 'अनूधा यदि जीजनदधा च नु ववक्ष सद्यो' ॥

**अन्वयः।** शिशोः तरुणस्य [कार्यं कुर्वतः अग्नेः] वक्षथः चित्रः इत्, यः मातरौ धातवे न अन्वेति, यत् चित् अजीजनत् अधा सद्यः अनूधाः महि दूत्यं चरन् आववक्षत्।

**आधियाज्ञिकम्।** 'शिशोः' प्रशंसनीयस्य, शिशुभूतस्य 'तरुणस्य' तरुणवत् कार्यं कुर्वतः अग्नेः 'वक्षथः' हविर्वहनं 'चित्रः' विचित्रम् 'इत्' एव, 'यः' जातोऽग्निः 'मातरौ, मातृभूते अरणी 'धातवे' रक्षार्थं 'न' 'अन्वेति' अनुगच्छति, यथा शिशु र्जातमात्रः स्तनपानादिलक्षणां मातुः रक्षामपेक्षते नायं तथेति भावः। 'यत्चित्' यदेव 'अजीजनत्' अरण्योः सकाशात् ऋत्विगेनमुत्पादितवान् 'अधः सद्यः' तत्कालमेव 'अनूधाः' स्तनपानमनपेक्षमाणः, उत्पत्त्यनन्तरं स्वयमेव प्रज्वलन्निति 'महि' महत् दूत्यं' दूतकर्म 'चरन्' आचरन् 'आववक्षत्' देवेभ्यो हवींषि आवहति।

**आध्यात्मिकम्।** 'शिशोः' प्रशंसनीयस्य, शिशुभूतस्य अणीयसः 'तरुणस्य' तरुणवत्कार्यं कुर्वतः सर्वशक्तिमतो महतः परमात्मनः (क) 'वक्षथः' जीवानां कर्मफलवहनं 'चित्रः इत्' विचित्रमेव, 'यः' परमात्मा 'मातरौ' मातापितरौ 'धातवे' रक्षार्थं 'न' 'अन्वेति' अनुगच्छति तस्य स्वयम्भूत्वात्। 'यत्चित्' यदेव 'अनूधाः' ऊधोरहितः तस्य सर्वशक्तिमत्वात् 'अजीजनत्' स ईश्वरो जगदुत्पादितवान् 'अधः सद्यः' तत्कालमेव स व्यक्तोऽभूत्। किञ्च 'महि' महत् 'दूत्यं' दूतस्य कर्म, कर्मानुसारेण भोगापवर्गप्रापकत्वमिति 'चरन्' आचरन् 'आववक्षत्' समन्तात् सर्वान् वहति सर्वाधिष्ठातृत्वेनेति। (ख)

**निरुक्तम्।** शिशुः प्रशंसनीयो भवति॥ १०।३९।२॥ महि महत्॥ ११।९।१॥

(क) 'नमो महद्भ्यो अर्भकेभ्यश्च'। यजुः। १६।२६॥

(ख) 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः'। यजुः ४०।८॥

## अथ तृतीया।

"वामदेव पुत्रो बृहदुक्थ ऋषिः। यामं साम, यम ऋषिः (यामं च।० आ० ब्रा०) त्रिष्टुप्। अग्निः। विनियोगस्तु आहवनीय मवदीप्यमानमर्वाक् शम्यापरासादिदन्त एकं पर ऊत एकमिति संवपेदिति।

१ २ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ ३ १ २ १ २
**इदं त एकं पर ऊत एकं, तृतीयेन ज्योतिषा संविशस्व।**
३ १ २ ३ २ १ २ ३ २ ३ १ २ ३ २
**संवेशनस्तन्वे ३ चारुरेधि, प्रियो देवानां परमे**
३ १ २
**जनित्रे ॥ ६५ ॥ (क)**

**पदपाठः।** इदम् १। ते ६। एकम् १। परः १। ऊ अ०। ते ६। एकम् १। तृतीयेन ३। ज्योतिषा ३। संविशस्व क्रि०। संवेशनः १। तन्वे ४। चारुः १। एधि क्रि०। प्रियः १। देवानाम् ६। परमे ७। जनित्रे ७।

**अन्वयः।** [हे अग्ने!] ते इदम् एकं [ज्योतिः], ते परः (=अपरम्) एकं [ज्योतिः] ऊ (=च), [किं च] तृतीयेन ज्योतिषा संविशस्व। परमे जनित्रे संवेशनः [भव] देवानां तन्वे चारुः प्रियः [च] एधि।

**भाष्यम्।** हे अग्ने! परमात्मन्! वा 'ते' तव 'इदम्' आदित्यरूपम् (ख) 'एकं' ज्योतिः, 'ते' तव 'परः' अपरम् 'एकं' विद्युद्रूपं ज्योतिः 'ऊ' चास्ति, किञ्च 'तृतीयेन' पार्थिवाग्निरूपेण 'ज्योतिषा' तेजसा 'संविशस्व' आधानकर्मणा सम्यक् प्रवेशं कुरु

(क) ऋ० ८।१।१८॥ 'संवेशने तन्वः'॥ अथर्व० १८।३।७॥ 'संवेशने तन्वा...सधस्थे'
(ख) सूर्य्य आत्मा जगतः। ऋ० १।८।७॥

संगच्छस्व वा (क)। 'परमे' 'जनित्रे' श्रेष्ठे जनयितरि सुखानामुत्पादके यज्ञे 'संविशन:' सम्यक् प्रविष्टा भव, 'देवानां' दिव्यगुणानां 'तन्वे', विस्ताराय 'चारु:' शोभन: 'प्रिय:' अनुकूलस्व 'एधि' भव।

## अथ चतुर्थी।

आङ्गिरसः कुत्स ऋषिः। एकमार्षेयं सामाग्निऋर्षिः, कौत्सं साम कुत्स ऋषि र्वा, यज्ञसारथिनामधेयकं वा साम (अग्नेश्चार्षेयं कौत्सं वा यज्ञसारथि वा। आ० ब्रा०) जगती। अग्नि:। विनियोगस्तु (इमꣳ स्तोममर्हते जातवेदसे इत्याग्नेयमाज्यं भवति सोदर्कमिन्द्रियस्य वीर्यस्य रसस्यानतिचाराय यत्र वै देवा इन्द्रियं वीर्यꣳ रसमपश्यꣳ स्तदनुव्यतुदन्। ता० म० ब्रा० १३।८।१) इति वहिष्पवमानस्य षष्ठेऽहनि।

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १
**इमꣳ स्तोममर्हते जातवेदसे रथमिव सम्महेमा मनी-**
१ २ ३ २उ ३ १ २ ३ १ २र ३ १र
**षया। भद्रा हि नः प्रमतिरस्य सꣳस द्यग्ने! सख्ये**
२ र ३ १
**मा रिषामा वयं तव॥ ६६॥ (ख)**

**पदपाठः।** इमम् २। स्तोमम् २। अर्हते ४। जातवेदसे ४। रथम् २। इव अ०। सम्महेमा क्रि०। मनीषया ३। भद्रा १। हि अ०। नः ६। प्रमतिः १। अस्य ६। संसदि ७। अग्ने सं०। सख्ये ७। मा अ०। रिषामा क्रि०। वयम् १। तव ६।

---

(क) त्रीणि ज्योतींषि सचते स षोड़शी। यजुः ३२।५॥

(ख) ऋ० १।६।३०॥

**अन्वयः।** [वयम्] अर्हते जातवेदसे [अग्नये] मनीषया रथमिव इमं स्तोमं [कुर्मः, अपि च तं] सम्महेमा। अस्य संसदि नः प्रमतिः भद्रा हि [भवतु] हे अग्ने! तव सख्ये वयं मा रिषामा।

**भाष्यम्।** वयम् 'अर्हते' पूज्याय 'जातवेदसे' जातधनाय जातप्रज्ञाय वाग्नये परमात्मने वा 'मनीषया' निश्चितया बुद्ध्या 'रथमिव' रमणसाधनं रथमिव 'इमं' 'स्तोमं' समूहं स्तुतीनामिति कुर्म्मः, अपि च तं 'सम्महेमा' सम्यक् पूजितं कुर्म्मः। 'अस्य' अग्नेः परमात्मनो वा 'संसदि' सम्भजने 'नः' अस्माकं 'प्रमतिः' प्रकृष्टा बुद्धिः 'भद्रा' 'हि' कल्याणी खलु भवतु। हे 'अग्ने' भौतिक! परमात्मन्! वा 'तव' 'सख्ये' आनुकूल्ये 'वयं' 'मा' 'रिषामा' न हिंसिता भवामः, अस्मान् रक्षेति भावः।

**निरुक्तम्।** मेति प्रतिषेधे ॥१।५।८॥ मनीषया मनस ईषया स्तुत्या प्रज्ञया वा ॥२।२५।१॥ भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा ॥४।९।१॥

## अथ पञ्चमी।

बार्हस्पत्यो भरद्वाज ऋषिः। द्वे सामनी वैश्वानराख्योऽग्नि ऋषिः (अग्ने वैश्वानरस्य सामनी द्वे। आ० ब्रा०) त्रिष्टुप्। वैश्वानरोऽग्निः। विषुवन्नामक-यज्ञाहेऽग्निमरुद्देवसंबन्धे शस्त्ररूपेण विनियोगः।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २उ ३ २ ३ २
**मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्।**
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**कविᳬ सम्राज मतिथिं जनाना मासन्नः पात्रं**
३ २
**जनयन्त देवाः ॥ ६७ ॥ (क)**

(क) ऋ० ४।५।८।

**पदपाठः।** मूर्द्धानम् २। दिवः ६। अरतिम् २। पृथिव्याः ६। वैश्वानरम् २। ऋते ७। आजातम् २। अग्निम् २। कविम् २। सम्राजम् २। अतिथिम् २। जनानाम् ६। आसन् २। नः ४। पात्रम् २। जनयन्त क्रि०। देवाः १।

**अन्वयः।** मूर्द्धानं दिवः पृथिव्याः च अरतिं वैश्वानरम् ऋते आजातं कविं जनानां सम्राजम् आसन् पात्रम् अग्निं देवाः नः जनयन्त।

**भाष्यम्।** 'मूर्द्धानं' शिरोवच्छ्रेष्ठं 'दिवः' प्रकाशवतः 'पृथिव्याः' प्रकाशरहितस्य जगतः च 'अरतिं' स्वामिनं 'वैश्वानरं' विश्वेषु नरेषु नायकम् 'ऋते' यज्ञाद्यनुष्ठाने सत्यज्ञानयुक्ते वेदे वा 'आजातं' सम्यक् प्रादुर्भूतं प्रसिद्धं वा 'कविं' क्रान्तदर्शनं 'जनानां' मध्ये 'सम्राजं' सम्यक् प्रकाशमानम् 'अतिथिम्' अतिथिवत्पूज्यम् 'आसन्' आस्यभूतं, मुखमिव श्रेष्ठं वा 'पात्रं' पातारं रक्षकम् 'अग्निं' भौतिकं परमात्मानं वा 'देवाः' विद्वांसः ऋत्विजः 'नः' अस्मदर्थं 'जनयन्त' जनयन्ति प्रकाशयन्ति।

**निरुक्तम्।** वैश्वानरः कस्माद् विश्वान्नरान्नयति। विश्व एनं नरा नयन्तीति वा। अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः॥ ७।२१।१॥ अयमेवाग्निर्वैश्वानर इति शाकपूणिः। विश्वानरा वेते उत्तरेज्योतिषी वैश्वानरोऽयं यत्ताभ्यां जायते॥ ७।२३।८॥ आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति॥ अग्निकर्मणा चैनं स्तौतीति वहसीति पचसीति दहसीति॥ ७।२३।१३, १४॥ आस्यमास्यतेः। आस्यन्दत एतदन्नमिति वा॥ १।९।१॥

## अथ षष्ठी।

भरद्वाज ऋषिः। सामनी द्वे आग्ने, इटतो नाम ऋषिः (आग्ने द्वे ऐटते वा। आ० ब्रा०) त्रिष्टुप्। अग्निः। विषुवन्नामकयज्ञाहे निष्केवल्यप्रयोगे विनियोगः।

२उ ३ १ २र ३ २ ३ १ २ ३ २
वि त्वदापो न पर्वतस्य पृष्ठा दुक्थेभिरग्ने जनयन्त देवाः।
३ १ २ ३ १ २ ३ १ २र ३ १ २
तं त्वां गिरः सुष्टुतयो वाजय न्त्याजिं न गिर्ववाहो
३ १ २
जिग्युरश्वाः ॥ ६८ ॥ (क)

**पदपाठः।** वि अ०। त्वत् ५। आपः १। न अ०। पर्वतस्य ६। पृष्ठात् ५। उक्थेभिः ३। अग्ने सं०। जनयन्त क्रि०। देवाः १। तम् २। त्वा २। गिरः १। सुष्टुतयः १। वाजयन्ति क्रि०। आजिम् २। न अ०। गिर्ववाहः सं०। जिग्युः क्रि०। अश्वाः १।

**अन्वयः।** हे अग्ने! देवाः उक्थेभिः त्वत् [तव सकाशात्] [आत्मनः कामान्] वि अजनयन्त, पर्वतस्य पृष्ठात् आपो न। हे गिर्ववाहः! [स्तोतारः] तं त्वा वाजयन्ति [अपि च] सुष्टुतयः गिरः [त्वां] जिग्युः, अश्वाः आजिं न।

**भाष्यम्।** हे 'अग्ने' भौतिक! परमात्मन्! वा 'देवाः' विद्वांसः स्तोतारः 'उक्थेभिः' वेदमन्त्रैः 'त्वत्' तव सकाशात् आत्मनः कामान् 'वि अजनयन्त' विविधान् जनयन्ति लभन्ते इति। अत्र दृष्टान्तमाह—'पर्वतस्य पृष्ठात् आपो न' मेघादुदकमिव। हे 'गिर्ववाहः' गीर्भिः प्रापणीय! स्तोतारः 'तं' पूर्वोक्तं 'त्वा' त्वां वाजयन्ति' वलिनं कुर्वन्ति, स्तुवन्ति, अन्नमिच्छन्तीति वा अपि च 'सुष्टुतयः' शोभनस्तुतिरूपाः 'गिरः' वाचः त्वां 'जिग्युः' जयन्ति, पुनर्दृष्टान्तमाह 'अश्वाः आजिं न' यथाऽश्वाः सङ्ग्रामं जयन्ति तद्वत्।

---

(क) ऋ० ४।६।१८॥ 'उक्थेभिरिन्द्रा नयन्त यज्ञैः। तं त्वाभिः सुष्टुतिभिर्वाजयन्त आजिं न जग्मु र्गिर्वाहो अश्वाः'॥

**निरुक्तम् ।** पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा ॥ १।२०।५ ॥ पर्वत इति मेघनाम ॥ २।२१।२ ॥ पृष्ठं स्पृशतेः संस्पृष्टमङ्गैः ॥ ४।३।२ ॥ वाजयतीत्यर्चतिकर्म्मा ॥ ३।१९।१ ॥ आजाविति सङ्ग्रामनाम ॥ ३।९।१९ ॥ आजिराजयनस्याजवनस्येति वा ॥ ९।२३।१ ॥

## अथ सप्तमी ।

गौतमो वामदेव ऋषिः । एकं वामदेव्यं साम, वामदेव ऋषिः, रौद्रं वा साम (वामदेव्यञ्च रौद्रं वा । आ० ब्रा०) त्रिष्टुप् । अग्निः । प्रातरनुवाके आश्विनशस्त्रे च विनियोगः ।

२ ३ १ २ ३ १ २ ३ १र २र ३ २ ३ १ २
**आ वो राजानमध्वरस्य रुद्रᳪ होतारᳪ सत्ययजᳪ रोदस्योः ।**
३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ १
**अग्निं पुरा तनयित्नोरचित्ता द्धिरण्यरूप मवसे कृणुध्वम् ॥ ६९ ॥** (क)

**पदपाठः ।** आ अ० । वः ६ । राजानम् २ । अध्वरस्य ६ । रुद्रम् २ । होतारम् २ । सत्ययजम् २ । रोदस्योः ६ । अग्निम् २ । पुरा अ० । तनयित्नोः ५ । अचित्तात् ५ । हिरण्यरूपम् २ । अवसे अ० । कृणुध्वम् क्रि० ।

**अन्वयः ।** अध्वरस्य राजानं होतारं रुद्रं रोदस्योः [मध्ये] सत्ययजं हिरण्यरूपम् अग्निं वः अवसे तनयित्नोः [इव] अचित्तात् पुरा आकृणुध्वम् ।

**भाष्यम् ।** हे मनुष्याः ! यूयम् 'अध्वरस्य राजानं' हिंसारहितस्य यज्ञस्य स्वामिनं 'होतारं' होमनिष्पादकं, कर्मफलप्रापकं वा 'रुद्रं' दुष्टानां सन्तापकं 'रोदस्योः सत्ययजं' द्यावापृथिव्योः मध्ये

---

(क) ऋ०, ३।४।२० ॥

यथार्थं यष्टारं 'हिरण्यरूपं' सुवर्णप्रभं, ज्योतिर्मयं हितं रमणं च रूपं प्रकाशो यस्य तम् 'अग्निं' यज्ञाग्निं, परमेश्वरं वा 'वः' युष्माकम् 'अवसे' रक्षणाय 'तनयित्नोः' स्तनयित्नोरशनिरिवाकस्मिकादागमनशीलात् 'अचित्तात्' नास्ति चित्तं ज्ञानं यस्मिन् तस्मात् ज्ञानराहित्यान्मृत्योः 'पुरा' प्रागेव 'आकृणुध्वम्' हविर्भिः सम्यग्जुहुत, उपासीध्वं वा।

**निरुक्तम्।** रोदसीति द्यावापृथिव्योर्नाम ॥ ३।२१।७॥ अग्निरिति रूपोपमा—हिरण्यरूपः—हिरण्यवर्णस्येवास्य रूपम् ॥ ३।१६।८ ॥

## अथाष्टमी।

वसिष्ठ ऋषिः। द्वे सामनी वैश्वज्योतिर्नामके ( वैश्वज्योतिषे द्वे। ग्रा० ग्रा० ) त्रिष्टुप्। वैश्वानरोऽग्निः। प्रातरनुवाके आश्विनग्रहग्रस्ते विनियोगः।

१२३ ३ २३१र २र ३ २३१२३१२ ३१२
**इन्धे राजा समर्यो नमोभिः र्यस्य प्रतीक माहुतं घृतेन।**
१२ ३१२ ३२३ १र २र३१२
**नरो हव्येभि रीड़ते सबाध आग्नि रग्रमुषसा-मशोचि ॥ ७० ॥ (क)**

**पदपाठः।** इन्धे क्रि०। राजा १। सम् अ०। अर्यः १। नमोभिः ३। यस्य ६। प्रतीकम् १। आहुतम् १। घृतेन ३। नरः १। हव्येभिः ३। ईड़ते क्रि०। सबाधः १। आ अ०। अग्निः १। अग्रम् १। उषसाम् ६। अशोचि क्रि०।

**अन्वयः।** राजा अर्यः अग्निः नमोभिः समिन्धे (=समिध्यते)। यस्य प्रतीकं घृतेन आहुतं [भवति यं च] सबाधः नरः हव्येभिः ईड़ते (=ईट्टे) [सोऽग्निः] उषसाम् अग्रम् आ अशोचि।

---

(क) ऋ० ५।२।११॥ 'अग्निरग्रे' ॥

**भाष्यम् ।** 'राजा' स्वप्रकाशः 'अर्यः' स्वामी 'अग्निः' भौतिकः परमात्मा वा 'नमोभिः' अन्नैर्नमस्कारैर्वा 'समिन्धे' समिध्यते सम्यग्दीप्यते, प्रकाश्यते वा। 'यस्य' अग्नेः परमात्मनो वा 'प्रतीकं' स्वरूपं 'घृतेन' सर्पिषा, ध्यानरसेन वा 'आहुतं' सम्यक् प्रदीपितं सम्यग्ध्यातं वा भवति, यं च 'सबाधः' सञ्जातबाधः 'नरः' मनुष्यः 'हव्येभिः' हव्यैः हविर्भिः, आगमानुमानध्यानाभ्यासरसैर्वा 'ईडते' ईट्टे, स्तौति, सोऽग्निः परमेश्वरो वा 'उषसामग्रं' प्रत्यूषसि ब्राह्मे मुहूर्त्ते इति 'आ अशोचि' समन्तात्प्रकाशते, अग्निर्वेद्यां, परमात्मा च हृदीति भावः।

**निरुक्तम् ।** अर्य इति ईश्वरनाम॥ २।२२।७॥ प्रतीकं प्रत्यक्तं भवति प्रतिदर्शनमिति वा॥ ७।३१।१॥

अथ नवमी ।

त्वष्टृपुत्रस्त्रिशिरा ऋषिः। द्वे सामनी यामे (यामे द्वे। आ० ब्रा०) त्रिष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे आग्नेयक्रतौ च विनियोगः।

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
प्र केतुना बृहता यात्यग्नि रारोदसी वृषभो रोरवीति।
३ २ ३ १ २ ३ १र २र ३ २ ३ १ २ ३ १
दिव श्चिदन्ता दुपमा मुदान ड़पामुपस्थे महिषो
२
ववर्द्ध॥ ७१॥ (क)

**पदपाठः।** प्र अ०। केतुना ३। बृहता ३। याति क्रि०। रोरवीति क्रि०। अग्निः १। आ अ०। रोदसी २। वृषभः १। रोरवीति क्रि०।

---

दिवश्चिदन्ताँ उपमाँ॥ अथर्व० १८।३।२॥

(क) ऋ० ७।६।२॥

दिवः ६। चित् अ०। अन्तात् ५। उपमाम् २। उदानट् क्रि०। अपाम् ६। उपस्थे ७। महिषः १। ववर्द्ध क्रि०।

**अन्वयः।** अग्निः बृहता केतुना रोदसी आ प्रयाति; वृषभः [इव] रोरवीति। दिवः चित् अन्तात् [मेघस्य] उपमाम् उदानट्; अपाम् उपस्थे महिषः सन् ववर्ध (=वर्धते) [च]।

**आधियाज्ञिकम्।** 'अग्निः' 'बृहता' महता 'केतुना' प्रज्ञापकेन चिह्नेन ज्वालारूपेणेति 'रोदसी' द्यावापृथिव्यौ प्रकाशाप्रकाशलोकौ 'आ' अभिव्याप्य 'प्रयाति' प्रकर्षेण गच्छति; 'वृषभः' (क) इव 'रोरवीति' भृशं रौति। 'दिवः' अन्तरीक्षलोकस्य 'चित्' अपि 'अन्तात्' पर्यन्तात् 'उपमां' मेघस्य समीपम् 'उदानट्' ऊर्द्ध्वं व्याप्नोति; 'अपां' वृष्टिलक्षणानां जलानाम् 'उपस्थे' क्रोड़े मध्ये वैद्युतात्मना 'महिषः' महान् सन् 'ववर्ध' वर्धते।

**आध्यात्मिकम्।** 'अग्निः' परमात्मा 'बृहता' महता 'केतुना' चिह्नेन विविधसृष्टिरचनागुणेन 'रोदसी' द्यावापृथिव्यौ 'आ' अभिव्याप्य 'प्रयाति' प्रकर्षेण गच्छति; 'वृषभः' (क) इव 'रोरवीति' शब्दात्मना वेदचतुष्टयेन भृशं रौति, पुनः पुनरुपदिशति। 'दिवः' अन्तरीक्षलोकस्य 'चित्' अपि 'अन्तात्' पर्यन्तात्, स्वप्रकाशस्वरूपेण सर्वत्रेति 'उपमाम्' उपमीयतेऽनया सैशशक्तिस्तां तया वा 'उदानट्' व्याप्नोति; 'अपां' कर्म्मणां श्रेष्ठतमानां यज्ञानामिति 'उपस्थे' उपस्थाने अनुष्ठाने इति 'महिषः' महान् सन् स परमेश्वरः 'ववर्ध' वर्द्धते, अस्मत्स्तुतिभिः प्रीतो भवतीति।

**निरुक्तम्।** वृषभो वर्षितापाम्॥ ४।८।१॥ वृषभः प्रजां वर्षतीति वाति बहति रेत इति वा तद्वृषकर्मा वर्षणाद् वृषभः॥ ९।२२।१॥ अन्तोऽततेः॥ ४।२५।६॥ उपम इत्यन्तिकनाम॥ ३।९।१७॥ उपस्थ उपस्थाने॥ ७।२६।१॥ महिष इति महन्नाम॥३।१३।५॥

---

(क) चत्वारि शृङ्गा त्रयो अस्य पादा, द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति, महो देवो मर्त्याँ आविवेश॥ ऋ० ४।५८।३॥

## अथ दशमी।

वसिष्ठ ऋषिः। द्वे वैराजे सामनी इन्द्र ऋषिः, वसिष्ठः प्रजापति-र्वा, पूर्वस्य साम्नो राशोति नामापरस्य मरायमिति पूर्वस्य मरुयं परस्य राशोति वा, स्फातिङ्करणे वा स्फातिः प्रसिद्धि र्वृद्धि र्वा तत्साधन-हेतुभूते सामनी [प्रशस्तमिति पदस्य साम्नि विद्यमानत्वात्], च्यावने, शैखण्डिने, ऐन्वके वा च्यवनः, शिखण्डी, इन्वको वा ऋषिः ( इन्द्रस्य वैराजे द्वे वसिष्ठस्य वा प्रजापते र्वा राशिमराये मरायराशिने वा स्फातिङ्करणे वा च्यावने वा शैखण्डिने वैन्वके वा। आ० ब्रा० ) विराट् त्रिष्टुप् छन्दः। अग्निः। चतुर्वीराख्ययागस्य चतुर्थे दिवसे विनियोगः। कथं यज्ञार्थमग्निरुत्पादनीय इत्यनेन सूचितं वा।

३ २ ३ १ २ ३ २ ३ १ २
**अग्निं नरो दीधितिभि ररण्यो र्हस्तच्युतं जनयत**

३ २ ३ १ २ ३ १ २ ० ३ २
**प्रशस्तम्। दूरेदृशं गृहपति मथव्युम्॥ ७२॥ (क)**

**पदपाठः।** अग्निम् २। नरः १। दीधितिभिः ३। अरण्योः ६। हस्तच्युतम् २। जनयत क्रि०। प्रशस्तम् २। दूरेदृशम् २। गृहपतिम् २। अथव्युम् २।

**अन्वयः।** नरः दीधितिभिः [योक्त्रमुत्तरारणिञ्च परिगृह्य] अरण्योः [सकाशात्] हस्तच्युतं प्रशस्तं दूरेदृशं गृहपतिम् अथव्युम् अग्निं जनयत (= जनयन्ति)।

**आधियाज्ञिकम्।** 'नरः' मनुष्याः ऋत्विजः 'दीधितिभिः' अङ्गुलिभिः योक्त्रं परिगृह्य, उत्तरारणिञ्च 'अरण्योः' सकाशात् 'हस्तच्युतं' हस्ताभ्यां जातं 'प्रशस्तं' प्रशस्यं 'दूरेदृशं' दूरेदर्शनं 'गृहपतिं' गार्हपत्यनामकम् 'अथव्युम्' अतनवन्तं, गमनवन्तमिति 'अग्निं' 'जनयत' जनयन्ति।

(क) ऋ० ५।१।२३॥ 'हस्तच्युती जनयन्त' 'अथर्युम्'॥

**आध्यात्मिकम्** । 'नरः' मनुष्या मननशीलाः 'दीधितिभिः' दीपिकाभि र्ध्यानधारणासमाधिरूपाभिः, 'अरण्योः' अरणिसदृशयोरात्मप्रणवयोः सकाशात् [आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः॥ कैवल्योपनि० १।११] 'हस्तच्युतं' हस्तयोर्ध्यानसमाधिरूपयोश्च्युतमुत्पादितं प्रत्यक्षीकृतमिति 'प्रशस्तं' प्रशस्यं 'दूरेदृशं' दूरे विद्यमानमन्तिके च 'गृहपतिं' गृहस्य ब्रह्मपुरः शरीरस्य पतिं पालकम् 'अथर्युम्' अतनवन्तं व्याप्तिमन्तम् 'अग्निं' प्रकाशरूपमीश्वरं 'जनयत' जनयन्ति, प्रत्यक्षीकुर्वन्तीति ।

**निरुक्तम्** । दीधितय इति अङ्गुलिनाम ॥ ३।८।४ ॥ दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृत एने। अग्निः समरणाज्जायत इति वा। जनयन्त प्रशस्तं दूरेदर्शनं गृहपति मतनवन्तम् ॥ ५।१०।१ ॥

## अथ व्याकरणम् ।

अग्रम् (७०)—'अगि' गतौ भ्वा० प० से० 'ऋज्रेन्द्राग्र०' उ० २।२८ इति रन् । १मा ।

अचित्तात् (६९)—'चिती' संज्ञाने भ्वा० प० से० भावे क्तः, 'श्वीदितो निष्ठायाम्' ७।२।१४ इतीण् निषेधः। नास्ति चित्तं यस्य तदचित्तं ज्ञानराहित्यं मृत्युरिति तस्मात् । ५मी ।

अजीजनत् (६४)—'जनी' प्रादुर्भावे दि० णिजन्तः लुङि ।

अथर्युम् (७२)—अततेः युस् बाहुलकात् धातोरथादेशः वकारागमश्च । अत + युः, अथ + युः अथर्युः । तम् ।

अधा (६४)—अधः ।

अनूधाः (६४)—'वह' प्रापणे भ्वा० 'श्वेः सम्प्रसारणं च' उ० ४।१९३, बाहुलकात्, वहति यत् इति ऊधः । असुन् प्रत्ययः, धातोः सम्प्रसारणे कृते दीर्घत्वं धकारश्चान्तादेशः । 'ऊन्दी' क्लेदने धातो र्वा । नास्ति ऊधो यस्याः सा 'ऊधसोऽनङ्' ५।४।१३१ ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । १मा ।

अन्तात् (७१)—'अम' गतौ भ्वा० प० से० 'हसि०' उ० ३।८६ इति तन्॥ 'अमेस्तुट् च' उ० ५।६० इति अरन् तुट् च॥ 'अति' बन्धने भ्वा० प० से० अन्तति पचाद्यच्चा। ५मी।

अन्वेति (३४)—अनु+'इण्' गतौ अ० प० लटि उपसर्गेण समासः।

अर्यः (७०)—'ऋ' गतौ, अर्य्यते। 'अर्यः स्वामिवैश्ययोः' ३।१।१०३ इति यत्। १मा।

अर्हते (६६)—'अर्ह' पूजायाम् भ्वा० प० से० अर्हति, 'अर्हः प्रशंसायाम्' ३।२।१३३ इति शतः. अर्हन् पूज्यः तस्मै।

आ (७०)—'आप्लृ' व्याप्तौ स्वा० क्विप्, पृषोदरादित्वात् पलोपः। अभिव्याप्य।

आक्रणुध्वम् (६९)—आ+'क्रञ्' हिंसायाम् स्वा० उ० अनि० लोट् ध्वम्। अनेकार्थत्वात्साधुः।

आजिम् (६८)—'अज' गतिक्षेपणयोः भ्वा० 'अज्यतिभ्यां च' उ० ४।१३१ इतीन्, बाहुलका-दजेर्वीभावो न। अजन्ति क्षिपन्ति शस्त्रादिकं यत्र स आजिस्तम्।

आजुहोता (६३)—आ+'हु' लोट् जुहुत। 'तप्तनप्०' ७।१।४५, अन्येषामपीति दीर्घः।

आववचत् (६४)—आ+वक्ते वहते वा साभ्यासात् लेट् तिप् शपः श्लुः।

आशोचि (७०)—आ+'शुच' शोके भ्वा० प० लुङ् कर्मणि। धातूनामनेकार्थत्वात्साधुः।

आसन् (६७)—'स्यन्दू' प्रस्रवणे भ्वा० आस्यन्दतेऽन्नादिना प्रस्रवति, आस्यन्दतेऽन्नादिना द्रवी-क्रियते अन्येभ्योऽपीति डः। 'असु' क्षेपणे दि० अस्यते वर्णो येन, अस्यते ग्रासोऽस्मिन् वा 'कृत्यल्युटो०' ३।३।११३ इति ण्यत्। 'पद्दन्नोमास्०' ६।१।६३ इति आस्यस्य असन्नादेशः 'सुपां सुलुक्०' ७।१।३९ इति द्वितीया विभक्ते र्लुक्।

इडस्पदे (६३)—'ईड़' स्तुतौ अ०+क्विप् ह्रस्वश्च। 'पद' गतौ दि० अच् घञ् वा। इडः पदे 'इड़ाया वा' ८।३.५४ इति विसर्गस्य सः पतिपुत्रादिषु परेषु। ७मी।

ईड़ते (७०)—'ईड़' स्तुतौ अ० लट् प्रथम पु० बहुव०। व्यत्ययेन।

उक्थेभिः (६८)—बहुलं छन्दसीति भिस ऐसभावः।

उदानट् (७१)—उद+'अशू' व्याप्तौ सङ्घाते च स्वा० लिटि (आनशे) एलोपः 'व्रश्च भ्रस्ज०' ८।२।३६ इति शान्तस्य षकारोऽन्तादेशश्छुत्वम्।

उपमाम् (७१)—उप+'माङ्' माने जु० भावे करणे वाऽङ् टाप्। उप+मीनातेः (मीञ् हिंसायाम् स्वा०) उपक्षियते स्वान्तिकम्। २या।

उपस्थे (७१)—उप पूर्वात्तिष्ठतेः 'सुपि स्थः' ३।२४ इति कः। सप्तम्यादि: २।४।११।

एधि (३५)—अस्तेर्लोटि मध्यमैकवचने 'घ्वसोरेद्धावभ्यासलोपश्च' ६।४।११९ घोरसेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च। आभोयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः। 'श्नसोरल्लोपः' ६।४।१११ इत्यल्लोपः।

गिर्वणाः (६८)—वन+घञ् गीर्भिर्वन्यतेति। सकारागमो व्यत्ययेन।

घृतेन (७०)—'घृ' सेचने भ्वा० प० से०। 'अग्निघृसिभ्यः क्तः' उ० ३।८९। जिघर्त्ति सञ्चलति दीप्यते वा तद्घृतं तेन।

चरून् (६४)—चरतेः शब्दः।

जनयत (७२)—जनयन्ति।

जनयन्त (६७)—जनयन्ति।

जनित्वे (६५)—जायतेः 'सर्वधातुभ्यः ष्ट्रन्' उ० ४।१५९ इति ष्ट्रन्। ७मी।

जिग्युः (६८)—'जि' जये भ्वा० प०। 'छन्दसि लुङ् लङ् लिटः' ३।४।६ इति सामान्ये लिट्।

तनयित्नोः (६९)—'स्तनिहृषि०' उ० ३।२९ इति स्तन्तादिलुच्। 'अयामन्ता०' ६।४।५५ आम, अन्त, आलु, आय्य, इत्नु, इष्णु, एषु णेरयादेशः स्यात्। स्तनयति शब्दयतीति स्तनयित्नुः। व्यत्ययेन सलोपः। तस्मात्।

तन्वे (६५)—चतुर्थी।

तरुणस्य (६४)—'तॄ' प्लवनसन्तरणयोः भ्वा० 'त्रो रश्च लो वा' उ० ३।५४ इति उनन्। तरतीति। तस्य।

त्मत् (६८)—तनोतेः 'तनोतेरनश्च वः' उ० २।६३ चात् क्विप् तुक्। ५मी।

दीधितिभिः (७२)—'दीधिङ्' दीप्तिदेवनयोः अ० आ० से० 'क्तिच् क्तौ च०' ३।३।१७४ इति क्तिच्। ताभिः।

दूत्यम् (६४)—'दूतस्य भागकर्म्मणी' ४।४।१२० इति यत्। दूतस्य भागोंऽशः कर्म चेति दूत्यं तत् रथा।

दूरेदृशम् (७२)—दूरे [५द] दृश्यतेऽसौ दूरेदृक् [३द] तम्।

धातवे (६४)—'धेट्' पाने भ्वा० प० अनि०। तुमर्थे तवेन् प्रत्ययः। धातवे धातुं पातुम्।

परः (६५)—लिङ्गव्यत्ययेन पुंस्त्वम्। परम्=अपरम्।

पर्वतस्य (६८)—'पर्व' पूरणे भ्वा० प० से०। 'भृमृदृशि०' उ० ३।११० इति अतच्। पर्वति पूर्णो भवतीति तस्य॥ पर्व विद्यतेऽस्मिन्निति मत्वर्थीतस्तकारप्रत्ययो वा।

पस्त्यानाम् (६३)—अप+स्त्यै शब्दसङ्घातयोः भ्वा० प० अनि० स्त्यायति। आतश्चोपसर्गे इति कः, पृषोदरादित्वात्साधुः।

पुरा (६९)—'पुर' अग्रगमने तु०। कः। टाप्। अव्ययसंज्ञा।

पृष्ठात् (६८)—'पृषु' सेचने भ्वा० प० से 'तिथपृष्ठ०' उ० २।१२ इति थक्। पर्षति सिञ्चति यो येन वा तत्पृष्ठं तस्मात्।

प्रतीकम् (७०)—प्रत्येति प्रतीयते वा। प्रति+इण्+ईकन्।

प्रमतिः (६६)—मन्यतेऽनया। मन ज्ञाने दि०। क्तिन्। प्रकृष्टा मतिः कर्मधा०।

प्रशस्तम् (७२)—प्रपूर्वात् शंसतेः क्तः।

भद्रा (६९)—'भदि' कल्याणे सुखे च भ्वा० आ० से० भन्दते, 'ऋजेन्द्रा०' उ० २।२८ इति रन् नलोपश्च निपात्यते।

मनीषया (६६)—'ईष' गतिहिंसादर्शनेषु भ्वा० आ० से०। इगुपधेति कः। करणे 'गुरोश्चहलः' ३।३।१०३ इति अकारो वा। ईषणमीषा, टाप्। मनस्+ईषा 'शकन्ध्वादिषु०' वा० इति सिद्धं तया।

मर्जयध्वम् (६३)—'मृज' शुद्धौ अ० प० अनि० धातोर्णिचि लोण्मध्यमबहुवचने। 'मृजेर्वृद्धिः' ७।२।११४ इति तु क्ङिति वेति भाष्यवार्त्तिककारमते न विकल्पात्पाक्षिको वृद्ध्यभावः।

महि (६४)—मह पूजायाम् भ्वा० ण्यन्तादच इः।

महिषः (७१)—महतेः 'अविमह्योः टिषच्' उ० १।४५ इति टिषच्।

मा (६६)—'माङ्' माने दि० क्विप्, सम्पदादित्वात्, निषेधेऽव्ययम्।

यजतम् (६३)—यजतेः 'भृमृदृशियजि०' उ० ३।११० इति अतच्। तम्।

रातहव्यम् (६३)—रातं दत्तं हव्यं हवि र्यस्मै तम्।

रिषामा (६६)—'रिष' हिंसायाम् भ्वा० प० वे० लिङि रिषेम। एकारयोरिकाराकारौ दीर्घश्च।

रोदस्योः (६९, ७१)—रोदितीति रोदः—असुन् 'षिद्गौरादिभ्यश्च' ४।१।४१ इति ङीष्। तयोः।

रोरवीति (७१)—रौते र्यङ्लुकि।

वत्थः (६४)—वहेरौणादिकोऽथप्रत्ययः 'शीङ्शपि०' उ० ३।११३ इति वत्।

वाजयन्ति (६८)—वाज इति अन्ननाम बलनाम च। तस्य नामधातुत्वे रूपम्।

वृषभः (७१)—'वृषु' सेचने भ्वा० प० 'ऋषिवृषिभ्यां कित्' उ० ३।१२३ इत्यभच्। वर्षतीति वृषभः।

वैश्वानरम् (६७)—विश्वं जगत् नृणाति नयतीति विश्वानरः 'नरे संज्ञायाम्' ६।३।१२९ इति दीर्घः। विश्वानरस्यापत्यम् 'ऋष्यन्धक०' ४।१।११४ इत्यण्॥ गोत्रापत्ये अनृष्यानन्तर्ये०' ४।१।१०४ इत्यञ् वा॥ यद्वा 'तस्मै हितम्' ५।१।५ इत्यण्।

शिशीः (६४)—'शो' तनूकरणे दि० 'शः कित् सन्वच्च' उ० १।२० कित्वान्न वृद्धिः सन्वत्वादित्वं च। श्यति तनूकरोति पितोः शरीरमिति।

सख्ये (६६)—'सख्युर्यः' ५।१।१२६ इति यः, सख्युर्भावः कर्म वा। तस्मिन्।

सत्ययजम् (६९)—सत्यं यथार्थं यजति यस्तम्।

सपर्यता (६३)—'सपर' पूजायाम् कण्ड्वादित्वाद्यक्। 'ऋचि तु नु०' ६।३।१३३ इति दीर्घः

सबाधः (७०)—'बाधृ' लोडने भ्वा० अच्। बाधेन सह वर्त्तमानः।

सम्महेमा (६६)—सम्+मह लिङ् महेम, द्व्यचोऽतस्तिङ इति दीर्घः।

संविशस्व (६५)—सम्पूर्वात् विशतेः व्यत्ययेनात्मनेपदम्।

संवेशनः (६५)—सम् विश+ल्युट्। सम्यक् प्रवेष्टा।

संसदि (६६)—सम्+षद्+क्विप्, सम्पदादित्वात् संसीदन्त्यस्यामिति तस्याम्।

सुष्टुतयः (६८)—सु+स्तुतयः ('ष्टुञ्' स्तुतौ+क्तिन्)। 'उपसर्गात्०' ८।३।३५ इति ०० ०षत्वम्।

हरुच्युतम् (७२)—'हसिमृग्रिण्०' उ० ३।८६ हसतीति हरुः। हन्तेर्वा। 'च्युङ्' गतौ क्तः, गत्यर्थाकर्मकेति कर्त्तरि क्तो वा। हरुभ्यां च्युतम्।

हिरण्यरूपम् (६९)—हृञ् हरणे। 'हर्यतेः कन्यन् हिर् च' उ० ५।४४ इति कन्यन् हृञो हिरादेशश्च। रुशब्दे। 'खष्पशिल्प०' उ० ३।२८ इति निपात्यते। हिरण्यरूपमिव रूपं यस्य तम्।

इति सप्तमी दशतिः सप्तमः खण्डश्च।

---

प्रथमम् (आग्नेयं) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। अष्टमः खण्डः। अष्टमो दशतिः।

## अथ प्रथमा।

बुधगविष्ठिरौ द्वौ ऋषी। श्यैनं साम श्येनऋषिः श्यैतं, श्ययनं, शायनं वा साम्नो नाम, यद्वा दीर्घायुष्यं साम प्रजापतिऋषिः (श्येनस्य श्यैनं वा श्यैतं वा श्ययनं वा प्रजापतेर्वा दीर्घायुष्यम्। आ० ब्रा०) त्रिष्टुप्। अग्निः। आग्नेयक्रतौ आश्विनशस्त्रे विनियोगः।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषा-

२ ३ २ ३ १ ३ २ ३ १ २ ३ २ ३ १ २

सम्। यह्वा इव प्र वया मुज्जिहानाः प्र भानवः

३ २ ३ १ २

सस्रते नाकमच्छ ॥ ७३ ॥ (क)

**पदपाठः।** अबोधि क्रि०। अग्निः १। समिधा ३। जनानाम् ६। प्रति अ०। धेनुम् २। इव अ०। आयतीम् २। उषासम् २। यह्वाः १। इव अ०। प्र अ०। वयाम् २। उज्जिहानाः १। प्र अ०। भानवः १। सस्रते क्रि०। नाकम् २। अच्छ अ०।

**अन्वयः।** अग्निः जनानां समिधा अबोधि, उषासं प्रति आयतीं धेनुम् इव। [तस्याग्नेः] भानवः नाकम् अच्छ प्र सस्रते, वयां प्रोज्जिहानाः यह्वा इव।

**भाष्यम्।** 'अग्निः' यज्ञाग्निः परमात्मा वा 'जनानां' यजमानानामुपासकानां वा 'समिधा' इन्धनेन साधनेन योगानुष्ठानेन वा 'अबोधि' बुध्यते प्रकाश्यते, अत्र दृष्टान्तमाह— 'उषासं प्रति' प्रातःकाले, 'आयतीम्' आगच्छन्तीं 'धेनुमिव' दुग्धप्रदां गामिव, यथा धेनुः प्रत्यूषसि अग्निहोत्रार्थं पयोदानाय प्रबुध्यते तथा ब्राह्ममुहूर्त्तेऽग्निः समिध्यते परमात्मा चोपास्यते। तस्याग्नेः परमेश्वरस्य वा 'भानवः' रश्मयः, ज्वालासमूहा विभूतयो वा 'नाकं' द्युलोक मविद्यमानदुःखं परमपदं वा 'अच्छ' आभिमुख्येन 'प्रसस्रते' प्रसरन्ति, पुनरत्रदृष्टान्तमाह—'वयां' शाखां 'प्रोज्जिहानाः' विस्तारयन्त 'यह्वा' महान्तः वृक्षाः 'इव', यथा महान्तस्तरवः शाखां विस्तार्य ऊर्द्ध्वमन्तरिक्षे व्याप्नुवन्ति तथाग्नेर्ज्वालासमूहाः द्युलोके विसृखन्ति परमात्मनो विभूतयश्च स्वस्वरूपे प्रसरन्तीति भावः।

(क) ऋ० ३।८।१२॥ 'सिस्रते'॥

**निरुक्तम्।** वयाः शाखा वेतेर्वातायना भवन्ति ॥ १।४।१६ ॥

### अथ द्वितीया।

वत्सप्रि ऋषिः। एकं वासुक्रं साम वसुक्र ऋषिः ( वासुक्रं च। आ० ब्रा० ) त्रिष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

२ ३ १ २ ३१ २ ३ ३ ३ १र २र ३ २ ३ १ २
**प्र भू र्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्म्माणम्।**
१ २ ३ २ ३ १र २र ३ १ २ ३ १र २र
**नयन्तं गीर्भिर्वना धियं धाः हरिश्मश्रुं न वर्म्मणा**
३ २
**धनर्चिम् ॥** ७४ (क)

**पदपाठः।** प्र भूः क्रि०। जयन्तम् २। महां २। विपोधाम् २। मूरैः ३। अमूरम् २। पुराम् ६। दर्म्माणम् २। नयन्तम् २। गीर्भिः ३। वना २। धियम् २। धाः क्रि०। हरिश्मश्रुम् २। न अ०। वर्म्मणा ३। धनर्चिम् २।

**अन्वयः।** हे स्तोतः! जयन्तं महां (=महान्तं) विपोधां मूरैः [अधिष्ठितानां] पुरां दर्म्माणम् अमूरम् [अग्निं] स्तोतुं प्रभूः। [अपि च त्वं] वना (=वननीयं) [धनानि] नयन्तं हरिश्मश्रुं न [तेजोमयं] वर्म्मणा [उपेतं] धनर्चिम् [अग्निम्] [उद्दिश्य] गीर्भिः धियं धाः (=अधाः)।

**भाष्यम्।** हे स्तोतः! त्वं 'जयन्तं' दुष्टरोगस्य भावस्य वा नाशकं 'महां' महान्तं 'विपोधां' मेधाविरक्षकं 'मूरैः' मूढैः अज्ञानिभिः अधिष्ठितानां 'पुरां' शरीराणां 'दर्माणम्' आदरेण रक्षकम्

(क) ऋ० ८।१।१ ॥ 'मूरा अमूरं' 'नयन्तो गर्भं वनां धियं धुर्हरिश्मश्रुं नार्वाणं धनर्चम्'।

'अमूरम्' अमूढं सर्वदा देदीप्यमानं सर्वज्ञं वाग्निं परमात्मानं वा 'स्तोतुं' 'प्रभूः' समर्थो भव। अपि च त्वं 'वना' वननीयं सम्भजनीयं 'नयन्तं' धनानि प्रापयन्तं 'हरिश्मश्रुं न' हरिः सूर्यस्तस्य श्मश्रुं किरणमिव तेजोमयं 'वर्मणा' कवचस्थानीयज्वालया रक्षणेन वोपेतं 'धनर्चिं' प्रीणनकरस्तोत्रमग्निं परमात्मानं वोद्दिश्य 'गीर्भिः' स्तुतिरूपाभिर्वेदवाग्भिः 'धियं' परिचरणरूपं कर्म 'धाः' विधेहि।

निरुक्तम्। विप इति मेधाविनाम॥ ३।१९।२॥ मूरा मूढाः, अमूरोऽमूढः॥ ६।८।४॥

## अथ तृतीया।

भरद्वाज ऋषिः। एकं पौषं साम (पौषं च। आ० ब्रा०) त्रिष्टुप्। पूषा देवता। चातुर्मास्येषु विनियोगः।

३ १ २ ३ १ २ ३ १ ३ ३ १ २र ३ १ २ ३ १ २

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरि-

२ ३ २ ३ १र २र ३ १ २

वासि। विश्वा हि माया अवसि स्वधावन् भद्रा ते

३ २ ३ १ २

पूषन्निह रातिरस्तु॥ ७५॥ (क)

पदपाठः। शुक्रम् १। ते ६। अन्यत् १। यजतम् १। ते ६। अन्यत् १। विषुरूपे ७। अहनी १। द्यौः १। इव अ०। असि क्रि०। विश्वाः २। हि अ०। मायाः २। अवसि क्रि०। स्वधावन् सं०। भद्रा १। ते ६। पूषन् सं०। इह अ०। रातिः १। अस्तु क्रि०।

अन्वयः। हे स्वधावन्! पूषन्! [अग्ने! त्वं] द्यौः इव असि; ते अन्यत् (=एकं) [रूपं] शुक्रं यजतम् अन्यत् ते [कृष्णम् अयजतम्, एवम्भूते] विषुरूपे अहनी (=अहोरात्रे)

(क) ऋ० ६।५८।१४। 'स्वधाव'॥

[भवतः]। [त्वं] हि विश्वाः मायाः अवसि, ते भद्रा रातिः इह अस्तु।

आधियाज्ञिकम् हे 'स्वधावन्' अन्नवन्! 'पूषन्' पुष्टिकर्त्तः! सूर्यरूपाग्ने! त्वं 'द्यौः इव' सर्वमावृत्य प्रकाशकः 'असि' 'ते' तव 'अन्यत्' एकं रूपं 'शुक्रं' शुक्लवर्णं 'यजतं' यज्ञार्हम् 'अन्यत्' 'ते' तव कृष्णमयजतमयज्ञार्हमिति, एवम्भूते 'विषुरूपे' विषमरूपे शुक्लकृष्णवर्णे 'अहनी' अहोरात्रे भवतः, उदयेन शुक्लमह्नोऽस्तमयेन कृष्णां रात्रिं करोषि। त्वं 'हि' 'विश्वाः' सर्वाः 'मायाः' प्रज्ञाः प्रज्ञावतामिति 'अवसि' पालयसि, 'ते' तव 'भद्रा' कल्याणीया 'रातिः' दानक्रिया 'इह' अस्मिंल्लोके अस्मान् प्रति अस्तु।

आध्यात्मिकम्। हे 'स्वधावन्' अन्नवन्! 'पूषन्' पुष्टिकर्त्तः! परमात्मन्! त्वं 'द्यौरिवासि' सर्वमावृत्य वर्त्तसे स्वप्रकाशरूपोऽसि 'ते' तव 'अन्यत्' एकं रूपं 'शुक्रं' शुक्लगतिरूपं देवयानाख्यं 'यजतं' सङ्गमनीयं विद्वद्भिः सम्यक् प्राप्तव्यम् 'अन्यत्' 'ते' तव कृष्णगतिरूपं पितृयानाख्यमयजतमसङ्गमनीयं मुमुक्षुभिस्त्याज्यम्, एवम्भूते 'विषुरूपे' विषमरूपे शुक्लकृष्णगतिरूपे 'अहनी' अहोरात्रे देवयानपितृयानरूपे भवतः। हे भोगापवर्गप्रद! पूषन्! त्वं 'हि' 'विश्वाः मायाः' सर्वाः प्रज्ञाः प्रज्ञावतामिति 'अवसि' पालयसि, 'ते' तव 'भद्रा' कल्याणीया प्रशस्या 'रातिः' मोक्षप्रदा दानक्रिया 'इह' अस्मिंल्लोके अस्मभ्यमस्तु [द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्। आभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च॥ यजुः १९।४७॥ पापपुण्यफलभोगाय संसारेऽस्मिन् द्वौ मार्गौ स्तः। प्रथमो देवयानाख्यो 'देवानां' विदुषां द्वितीयः पितृयानाख्यो 'मर्त्यानां' विद्याविज्ञानरहितानां मनुष्याणाम्। यया मोक्षाख्यं पदं लब्ध्वा जन्ममरणसंकुलात् संसाराद् विमुच्यते सा देवयानाख्या सृतिर्मुमुक्षुभिरभिलषिता। यया तु पितृभ्यां देहं धृत्वा पापपुण्यफले सुखदुःखे पुनःपुनर्भुज्येते सा सृतिः पितृयानाख्या।

**निरुक्तम्।** शुक्रं ते अन्यल्लोहितं ते अन्यद्यजतं ते अन्यद्यज्ञियं ते अन्यद्विषमरूपे ते अहनो कर्म द्यौरिव चासि सर्वाणि प्रज्ञानान्यवस्यन्नवन् भाजनवती ते पूषन्निह दत्तिरस्तु॥ १२।१७।१॥ अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति॥ १२।१६।२॥

## अथ चतुर्थी।

विश्वमित्र ऋषिः। कौत्सं साम कुत्स ऋषिः ( कौत्सं च। आ० ब्रा० ) त्रिष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

१ २ ३ २ १ ३ १र २र ३ १र २र
**इड़ा मग्ने पुरुदꣳससꣳ सनिं गोः शश्वत्तमꣳ हवमानाय**

१ २ ३ १र ३ २उ ३ १ २
**साध। स्यान्नः सूनु स्तनयो विजावा ग्ने! सा ते**

३ १ २ ३ २
**सुमति र्भूत्वस्मे॥ ७६॥ (क)**

**पदपाठः।** इड़ाम् २। अग्ने सं०। पुरुदंससम् २। सनिम् २। गोः ६। शश्वत्तमम् २। हवमानाय ४। साध क्रि०। स्यात् क्रि०। नः ६। सूनुः १। तनयः १। विजावा १। अग्ने सं०। सा १। ते ६। सुमतिः १। भूतु क्रि०। अस्मे ४।

**अन्वयः।** हे अग्ने! [त्वं] पुरुदंससं गोःसनिम् इडां शश्वत्तमं हवमानाय साध। नः सूनुः तनयः स्यात् [तथा] ते सुमतिः विजावा [सती] अस्मे भूतु।

**भाष्यम्।** हे 'अग्ने' भौतिक! परमात्मन्! वा त्वं 'पुरुदंससं' बहुकर्माणं 'गोः सनिं' गवादिपशूनां ज्ञानस्य वा सम्पादयित्रीम् 'इड़ां' प्रशंसनीयां वाचं 'शश्वत्तमं' निरन्तरं 'हवमानाय' यजमनायोपासकाय वा 'साध' प्रापय। हे अग्ने तव कृपया 'नः'

(क) ऋ० ३।१।२, १५, २२, २३॥ २।८।२५, २७॥ ३।८।१६॥

अस्माकं 'सूनुः' पुत्रः 'तनयः' पौत्रो विद्यासुखप्रचारकः स्यात् भवतु 'ते' तव 'सुमतिः' अनुग्रहात्मिका बुद्धिः 'विजावा' विविधप्रकाशयुक्ता, अवन्ध्या वा सती 'अस्मे' अस्मभ्यं 'भूतु' भवतु।

निरुक्तम् सूनुरित्यपत्यनाम ॥ ३।१।२ ॥

## अथ पञ्चमी।

वत्सप्रि ऋषिः। द्वे सामनी काश्यपे, कश्यप ऋषिः (काश्यपे द्वे। आ० ब्रा०) त्रिष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

१र २र १ २ ३१ २३ २ ३१२ १ २ ३२
प्र होता जातो महान्नभोविन् नृषद्मा सीददपां विवर्त्ते।
२ ३ २ ३ २ ३ १र २र ३१र २र ३ १
दधद्यो धायी सु ते वयाᳬंसि यन्ता वसूनि विधते
२ ३ २
तनूपाः ॥७७॥ (क)

**पदपाठः।** प्र अ०। होता १। जातः १। महान् १। नभोवित् १। नृषद्मा १। सीदत् क्रि०। अपाम् ६। विवर्त्ते ७। दधत् १। यः १। धायी १। सु अ०। ते ४। वयांसि २। यन्ता १। वसूनि २। विधते ४। तनूपाः १।

**अन्वयः।** यः [अग्निः] अपां विवर्त्ते प्रसीदत्, [स इदानीं] होता जातः महान् नभोवित् नृषद्मा दधत् सुधायी तनूपाः भवति [सः] ते वयांसि वसूनि च यन्ता [भवतु]।

**भाष्यम्।** 'यः' अग्निः परमेश्वरो वा 'अपां विवर्त्ते' अन्तरिक्षस्य विवर्त्तने उत्सङ्गे वैद्युतात्मना, यज्ञादिकर्मणां समीपे वा 'प्रसीदत्' प्रसीदति, स इदानीं यजनशीलस्य 'होता' होमनिष्पा-

(क) ऋ० ८।१।१ ॥ 'नृषद्वा सीददपामुपस्थे। दधि र्यो धायि स ते'।

दकः, हव्यफलप्रापको वा 'जातः' प्रादुर्भूतः, प्रसिद्धो वा 'महान्' सद्गुणैः पूज्यः 'नभोवित्' अन्तरिक्षस्य वेत्ता 'नृषद्मा' नृषु सीदति स जाठराग्निरूपः, अन्तर्यामी वा 'दधत्' हवींषि सर्वं जगद्वा धारयन् 'सुधायी' वेद्यां सुनिहितः, शोभनो धाता वा 'तनूपाः' शरीररक्षकः भवति। सोऽग्निर्भौतिकः परमात्मा वा 'विधते' परिचरते 'ते' तुभ्यं यजमानायोपासकाय वा 'वयांसि' अन्नानि सुखानि वा 'वसूनि' धनानि च 'यन्ता' नियमयिता, प्रदाता भवतु।

## अथ षष्ठी।

वसिष्ठः ऋषिः। एकं साम आङ्गिरसो घृताचि ऋषिः ( घृताचेराङ्गिरसस्य साम। आ० ब्रा०) त्रिष्टुप्। अग्निः। विनियोगस्तु लैङ्गिकः।

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २

**प्र सम्राज मसुरस्य प्रशस्तं पुꣳसः कृष्टीना मनुमाद्यस्य।**

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

**इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु॥ ७८॥ (क)**

**पदपाठः।** प्र अ०। सम्राजम् २। असुरस्य ६। प्रशस्तम् २। पुंसः ६। कृष्टीनाम् ६। अनुमाद्यस्य ६। इन्द्रस्य ६। इव अ०। तवसः ६। कृतानि २। वन्दद्वारा २। वन्दमाना २। विवष्टु क्रि०।

**अन्वयः।** [हे स्तोतः! भवान्] असुरस्य पुंसः कृष्टीनां [च] अनुमाद्यस्य तवसः इन्द्रस्य इव [अग्नेः] प्रशस्तं सम्राजं [तेजः प्रस्तौतु] तथा वन्दद्वारा (=वन्दद्वाराणि) वन्दमाना (=वन्द्यमानानि) कृतानि प्र विवष्टु।

**भाष्यम्।** हे स्तोतः! भवान् 'असुरस्य पुंसः' बलवतः पुरुषस्य 'कृष्टीनां' मनुष्यमात्राणां च 'अनुमाद्यस्य' स्तुत्यस्य 'तवसः

---

(क) ऋ० ५।२।९ 'सम्राजो असुरस्य प्रशस्तिम्' 'वन्दे दारु' वन्दमानो विवक्मि'।

इन्द्रस्य इव' शक्तिमत: सूर्य्यस्य इव अग्ने भौतिकस्य परमात्मनो वा 'प्रशस्यम्' उत्कृष्टं 'सम्राजं' सम्यग् राजमानं तेज: स्वरूपं वा प्रस्तौतु। तथा 'वन्दद्वारा' वन्दद्वाराणि स्तुतिप्रमुखानि 'वन्दमाना' वन्द्यमानानि सर्व्वै: स्तूयमानानि 'कृतानि' कर्म्माणि 'प्र विवष्टु' प्रकर्षेण कामयताम्।

**निरुक्तम्**। पुमान् पुरुमना भवति। पुंसते र्वा॥ ८।१५।१॥

## अथ सप्तमी।

विश्वामित्र ऋषि:। एकं प्रासाहं साम, भरद्वाज ऋषि: भरद्वाजस्य प्रासाहम्। आ० ब्रा०) त्रिष्टुप्। अग्नि:। वरुणप्रघासादियागेऽग्निप्रणयनादिकार्य्ये विनियोग:।

३ २° ३   १ २र   ३ १ २ ३   १ २   ३ १र   १र
**अरण्यो र्निहितो जातवेदा गर्भ इवेत् सुभृतो**
३ १ २   ३ १ २ ३ १ २   ३ १ २   ३ १ २
**गर्भिणीभि:। दिवे दिव ईड्यो जागृवद्भि र्हविष्मद्भि**
क २र ३ २
**र्मनुष्येभिरग्नि:॥ ७९॥ (क)**

**पदपाठ:**। अरण्यो: ७। निहित: १। जातवेदा: १। गर्भ: १। इव अ०। इत् अ०। सुभृत: १। गर्भिणीभि: ३। दिवे दिवे ७। ईड्य: १। जागृवद्भि: ३। हविष्मद्भि: ३। मनुष्येभि: ३। अग्नि: १।

**अन्वय:**। जातवेदा: अग्नि: अरण्यो: निहित:, गर्भिणीभि: गर्भ: इव सुभृत:, जागृवद्भि: हविष्मद्भि: मनुष्येभि: दिवे दिवे इत् (= एव) ईड्य: भवति।

---

(क) ऋ० ३।१।२९॥ 'इव सुधित'॥

**भाष्यम् ।** 'जातवेदाः' जातधनः प्राणिनां वेदिता 'अग्निः' भौतिकः परमात्मा वा 'अरण्योः' मध्ये 'निहितः' स्थितः 'अरणि-सदृशयोः आत्मप्रणवयोर्मध्ये स्थितो वा । अत्र दृष्टान्तः—'गर्भिणीभिः गर्भ इव सुभृतः' गर्भवतीभिः यथा गर्भः सुध्रियते तद्वन्निगूढः सम्यग्धारितो वा 'अग्निः' भौतिकः परमात्मा वा 'जागृवद्भिः' जागरूकैः 'हविष्मद्भिः' सम्भृतहविष्कैः ज्ञानसाधनै र्वा 'मनुष्येभिः' मनुष्यैः 'दिवेदिवे' प्रतिदिनम् 'इत्' एव 'ईड्यः' स्तुत्यो भवति ।

## अथाष्टमी ।

पायु ऋषिः । राक्षोघ्नं साम वैश्वानरोऽग्नि ऋषिः अत्रि र्वा (अग्ने वैश्वानरस्य राक्षोघ्न मते र्वा । आ० ब्रा०) त्रिष्टुप् । रक्षोहाग्निः । रक्षोहननार्थं जपादिषु विनियोगः ।

३ १ २ ३ २ ३ २ ३ १ २ ३
**सनादग्ने मृणसि यातुधाना न्न त्वा रक्षाꣳसि**
१ २ १ २ ३ १ २ ३ २ ३ १ २
**पृतनासु जिग्युः । अनु दह सहमूरान् क्रव्यादो मा ते**
३ १ २ ३ १ २
**हेत्या मुक्षत दैव्यायाः ॥ ८० ॥ (क)**

**पदपाठः ।** सनात् अ० । अग्ने सं० । मृणसि क्रि० । यातुधानान् २ । न अ० । त्वा २ । रक्षांसि २ । पृतनासु ७ । जिग्युः क्रि० । अनु दह क्रि० । सहमूरान् २ । क्रव्यादः २ । मा अ० । ते ६ । हेत्याः ५ । मुक्षत क्रि० । दैव्यायाः ५ ।

**अन्वयः ।** हे अग्ने ! सनात् यातुधानान् मृणसि, रक्षांसि पृतनासु त्वा न जिग्युः । [अपि च] सहमूरान् (= समूलान्) क्रव्यादः अनुदह, ते दैव्यायाः हेत्याः [ते] मा मुक्षत (= अमुक्षत) ।

---

(क) ऋ० ८।४।८ ।

**भाष्यम् ।** हे 'अग्ने' भौतिक ! परमात्मन् ! वा त्वं 'सनात्' चिरादेव 'यातुधानान्' राक्षसान् पीड़ादायकान् बहिरन्तःशत्रून् वा 'मृणसि' नाशयसि, 'रक्षांसि' राक्षसाः विघ्नकारिणः 'पृतनासु' संग्रामेषु 'त्वा' त्वां 'न' 'जिग्युः' जितवन्तः । अपि च त्वं 'सहमूरान्' समूलान् 'क्रव्यादः' मांसभक्षकान् दुष्टान् रोगान् दुष्टगुणान् वा 'अनुदह' स्वतेजसा अनुक्षणं भस्मी कुरु, 'ते' तव 'दैव्यायाः हेत्याः' दिव्याच्छस्त्रात् (क) ते यातुधानाः 'मा मुक्षत' मुक्ता नाभूवन् ।

**निरुक्तम् ।** सनात् चिरम् ॥ १२।३६।१ ॥ पृतना इति सङ्ग्रामनाम ॥ २।१७।१९ ॥ हेति र्हन्तेः ॥ ६।३।१ ॥

## अथ व्याकरणम् ।

अनुमाद्यस्य (७८)—अनु + 'मदी' हर्षे दि० + ण्यत् । तस्य ।

अबोधि (७३)—बुध्यतेर्लुङि ।

अमूरम् (७४)—'मुह' वैचित्ये दि० मुह्यति 'गत्यर्था०' ३।४।७२ इति क्तः, व्यत्ययेन रेफः । न मूरस्तम् ।

असुरस्य (७८)—'असु' क्षेपणे दि० अस्यति क्षिपति देवान् 'असेरुरन्' उ० १।४२ इत्युरन् ॥ अस्यति, 'अस' गतिदीप्त्यादानेषु भ्वा० असति, ते, 'भृ स्तृ०' उ० १।१० इत्युः, असून् प्राणान् राति ददातीति असु रा + कः ॥ असुषु रमते इति असु + रम् + डः ॥ सुरः—'षु' प्रसवैश्वर्ययोः भ्वा० सवति, अ० सौति, 'षूञ्' अभिषवे स्वा० सुनोति, ते, 'सु सू०' उ० २।२४ इति क्रन् । 'षुर' ऐश्वर्यदीप्त्योः तु० सुरति, + कः । सु + राजृ दीप्तौ भ्वा० + डः । न सुर इत्यसुरस्तस्य ।

अस्मे (७९)—अस्मभ्यमित्यत्र विभक्तौ 'सुपां सुलु' गिति शेभावः ।

(क) वितापा व्याधिदारिद्र्यदुर्भिक्षादयः ।

अहनी (७५)—'ओहाक्' त्यागे जु० 'नञि जहातेः' उ० १।१५८ इति कनिनि आतो लोपः। जहाति त्यजति पृथक्करोत्यन्धकारमित्यहः। ते।

आयतीम् (७३)—'यम' उपरमे भ्वा० आयम्यतेऽनया अत्र वा, आयास्यतिर्वा, 'कृदिकारादक्तिनः' वा० ४।१।४५ इति ङीष्। ताम्।

इळाम् (७६)=‘इल' स्वप्नक्षेपणयोः तु० इलति+कः+टाप् (ड़) ताम्।

ईड्यः (७९)—'ईड़' स्तुतौ अ०+यत्।

उज्जिहानाः (७३)—उत्+'ओहाङ्' गतौ जु० जिहीते+शानच्।

उषासम् (७३)—'अन्येषामपि' ६।३।१३७ इति दीर्घः।

क्रव्यादः (८०)—क्रव्यमामसांसमत्तीति क्रव्यात् 'क्रव्ये च' ३।२।६९ इत्यदेर्विट्। परं क्रव्यादस्तु पक्वमांसशब्दे उपपदे 'कर्मण्यण्' ३।२।१ इत्यण्, उपपदस्य क्रव्यादेशः पृषोदरादित्वात्। व्यत्ययेन क्रव्यशब्दस्य रेफवकारयोर्लोपे रूपम्।

कृतानि (७८)—'डुकृञ्' करणे त०+क्तः। तानि।

गर्भः (७९)—गिरति, गृणाति 'अर्त्तिगृभ्यां भनन्' उ० ३।१५२ इति भनन्।

गर्भिणीभिः (७९)—गर्भोऽस्यामस्तीति+इनिः ताभिः।

जागृवद्भिः (७९)—'जागृ' निद्राक्षये अ० जागर्त्ति वतुप्। तैः।

तनयः (७६)—तनोति वंशम्। 'वलिमलितनिभ्यः' उ० ४।९९ इति कयन्।

तवसः (७८)—तवतिर्वधार्थः सौत्रो धातुः। असुन्। तस्य।

दर्माणम् (७४)—'दृङ्' आदरे तु०। अन्येभ्योऽपीति मनिन्। आद्रियत इति तम्।

दैव्यायाः (८०)—देवानामिदमिति प्राग्दीव्यतीयेष्वर्थेषु 'देवाद्यञञौ' वा० ४।१।८५ इति यञ्। टाप्। तस्याः।

धनर्चिम् (७४)—दधातेः 'कृपृ०' उ० २।८१ इति क्युः 'युवोरनाकौ' ७।१।१ इति योरनः धनम्। ऋचतेः इन् ऋचिः। धनाय ऋचिर्यस्य तम्।

धाः (७४)—डुधाञ् धातौ लुङि सिपि अधाः। अडभावः।

धेनुम् (७३)—'धेट्' पाने भ्वा० 'धेट् इच्च' उ० ३।३४ इति नुः। धयन्ति पिबन्ति यस्याः सा धेनुः ताम्।

नभोवित् (७७)—'णह' बन्धने दि०। 'नहे र्दिवि भश्च' उ० ४।२११ इत्यसुन्। नह्यति घर्मं बध्नातीति नभः। नभो वेत्तीति क्विप्।

नृषद्मा (७७)—नृषु सीदतीति। नृ+षद+मनिन्।

पुराम् (७४)—पिपर्त्तेः 'भ्राजभास०' ३।२।१७७ इति क्विप्। 'उदोष्ठ्यपूर्वस्य' ७।१।१०२ इत्युत्वम्। रपरः। 'र्वोरुपधाया०' ८।२।७६ इति दीर्घः। 'पुर' अग्रगमने तु० पूर्यते सम्पदादित्वात् क्विप् वा। पूः। तासाम्।

पुरुदंससम् (७६)—पुरु बहु दंसः कर्म यस्य तम्।

पुंस: (७८)—'पा' रक्षणे भ्वा० 'पातेर्डुम्सुन्' उ० ४।१७८ तस्य।

पूषन् (७५)—'श्वनुचन् पूषन्०' उ० १।१५९ इति कनिन्। 'पुष' पुष्टौ भ्वा०, दि०, क्र्या०। सम्बुद्धौ।

पृक्तासु (८०)—'पृङ्' व्यायामे तु० बाहुलकात् तनन् गुणाभावश्च। व्याप्रियन्तेऽत्र योद्धारः। तासु।

प्रभू: (७४)—प्र+अभू:। अडभाव:।

प्रसीदत् (७७)—प्र+असीदत्। अडभाव:।

भानव: (७३)—भाते: 'दाभाभ्यां नु:' उ० ३।३२ इति नु:। भातीति भानुस्ते।

भूत (७६)—'बहुलं छन्दसी' ति शपो लुक् 'भूसुवो०' ७।३।८८ इति गुणप्रतिषेध:।

मनुष्येभि: (७९)—मनोरपत्यं 'मनोर्जातौ०' ४।१।१६१, बहुलं छन्दसीति भिस ऐसभाव:।

मह्ना (७४)—'दीर्घादटि समानपादे' ८।३।९ दीर्घात् नकारस्य रुर्वा स्यात् अटि, तौ चेत् नाटौ एकपादस्थौ स्याताम्।

माया: (७५)—'माछा०' उ० ४।१०९ इति य:। मात्यन्तर्भवतीति माया ता:।

मुचत (८०)—'मुचॢ' मोचणे तु० लुङि प्रथमबहुवचने अमुचत। अडभावो माङि 'न माङ् योगे' ६।४।७४ इति।

मृणसि (७०)—'मृण' हिंसायाम् तु० प० लट्, सिप्।

यातुधानान् (८०)—'यत' निकारोपस्कारयो: चु०+उ:॥ याते: 'कमिमनि०' उ० १।७३ इति तु:। यातु+धा+युच् 'बहुलमन्यत्रापि' उ० २।७८ इति। 'कृत्यल्युटो०' ३।३।११३ इति ल्युट् वा। यातूनि रक्षांसि दधातीति। तान्।

वन्दद्वारा (७८)—वन्दद्वाराणि स्तुतिप्रमुखानि वदि+घञ्। हृ, द्वारयति+अच्। वन्द: स्तुति: द्वारं मुखं येषां तानि।

वन्दमाना (७८)—वन्द्यमानानि स्तूयमानानि। कर्मणि शानच्, विभक्तेर्लुक्।

वयाम् (७३)—'वय' गतौ भ्वा०+अच्+टाप्। वयते आकाशे प्रसरति इति वया शाखा ताम्।

वर्मणा (७४)—वृणोते: 'अन्येभ्योऽपि०' ३।२।७५ इति मनिन्। तेन।

विजावा (७६)—विजायते इति 'अन्येभ्योऽपीति वनिप्, 'विड्वनो०' ६।४।४१ इत्यनुनासिकस्य आत्वात्।

विधते (७७)—'विध' विधाने तु०+शतृ:। ४र्थी।

विपोधाम् (७४)—'विप' क्षेपे चु०+क: विपो मेधावी। तान् दधातीति तम्। विप+धा+विच्।

विवर्त्तं (७७)—वि+वृतु+घञ्। तस्मिन्।

शश्वत्तमम् (७६)—शश्वत् (५८)+तमप्। निरन्तरम्।

सगात् (८०)—षण संभक्तौ भ्वा० + आत्। सदार्थेऽव्ययम्।

समिधा (७३)—सम् + ञिइन्धीदीप्तौ रु० + सम्पदादित्वात्करणे क्विप्। नलोपः। समिध्यतेऽनया।

सम्रते (७३)—'सृ' गतौ भ्वा० लट्, शपः श्लुः, आत्मनेपदं छान्दसम्। सरन्ति।

सहमूरान् (८०)—समूलान्। व्यत्ययेन हः, लस्य रश्च।

साध (७६)—साध संसिद्धौ स्वा०। अन्तर्भावितण्यर्थोऽयम्। लोटि व्यत्ययेन 'सेर्ह्यपिच्च' ३।४।८७ इति हिरादेशः, तस्य 'अतो हेः' ६।४।१०५ इति लुक्।

सुधायी (७७)—सु + धा + णिनि। 'आतो युक्०' ७।३।३३।

सुभृतः (७९)—सु + भृञ् भ्वा० + क्तः।

सुमतिः (७६)—सु + मन + क्तिन्।

सूनुः (७६)—'षूङ्' प्राणिप्रसवे भ्वा०, अ०। 'सुवः कित्' उ० ३।३५ इति नुः। सूयते उत्पद्यतेऽसौ।

स्वधावन् (७५)—सु + 'ऋ' अ० अन्येभ्योऽपीति विच्, सर्वलोपः, गुणः। यथा सु अर्, रलोपः, गुणः। स्व॥ 'धा'—आतोऽनुसर्गे इति कः, टाप्॥ धा। स्वधा॥ 'ष्वद' भ्वा०। स्वद्यतेऽनया। आ, पृषोदरादित्वाद्दस्य धः॥ वनिप्? सं०।

हवमानाय (७६)—'ह्वेञ्'। 'भावेऽनुपसर्गस्य' ३।३।७५ इत्यप् सम्प्रसारणञ्च। शानच् 'आने मुक्' ७।२।८२। ४र्थी।

हरिश्मश्रुम् (७४)—हृञ् भ्वा० 'हृपिषि०' उ० ४।११९ इतीन्, गुणः। हरिः। 'श्रिञ्' सेवायाम् भ्वा० 'श्मनि श्रयतेर्डुन्' उ० ५।२८॥ हरिः सूर्यस्य श्मश्रु किरणः। व्यत्ययेन पुंस्त्वम्।

हविष्मद्भिः (७९)—हविः + अस्त्यर्थे मतुप्। ३ या।

हेत्याः (८०)—हन्ते र्हिनोते र्वा 'ऊति यूति०' ३।३।९७ इति क्तिनि हन्तेर्नकारस्यैत्वं हिनोते-र्गुणश्च॥ तस्याः॥

इति अष्टमी दशतिः अष्टमः खण्डश्च।

---

प्रथमम् ( आग्नेयं ) पर्व । प्रथमोऽध्यायः । प्रथमः प्रपाठकः । नवमः खण्डः । नवमी दशतिः ।

### अथ प्रथमा ।

गयत्रि ऋषिः । द्वे पाथे सामनी (पाथे च । आ० ब्रा०) अनुष्टुप् छन्दः (क) । अग्निर्देवता । प्रातरनुवाके आश्विनशस्त्रे च विनियोगः ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
**अग्न ओजिष्ठ माभर द्युम्नमस्मभ्य मध्रिगो ।**
१० २ ३ १र २र ३ २ ३ १ २ ३ १ २
**प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥८१॥** (ख)

**पदपाठः ।** अग्ने सं० । ओजिष्ठम् २ । आभर क्रि० । द्युम्नम् २ । अस्मभ्यम् ४ । अध्रिगो सं० । प्र अ० । नः ४ । राये ४ । पनीयसे ४ । रत्सि क्रि० । वाजाय ४ । पन्थाम् २ ।

**अन्वयः ।** हे अध्रिगो ! अग्ने ! [त्वम्] ओजिष्ठं द्युम्नम् अस्मभ्यम् आभर, [अपि च] पनीयसे राये वाजाय [च] नः पन्थां (= पन्थानं) प्ररत्सि ।

**भाष्यम् ।** हे 'अध्रिगो' (ग) अप्रतिहतगमन ! 'अग्ने' यज्ञाग्ने ! परमात्मन् ! वा त्वम् 'ओजिष्ठं' बलवत्तमं 'द्युम्नं' प्रकाशकं ज्ञानरूपं वा धनम् 'अस्मभ्यम्' 'आभर' आहर, देहि ; अपि च 'पनीयसे' प्रशंसनीयाय 'राये' धनाय 'वाजाय' अन्नाय च 'नः' अस्मभ्यं 'पन्थां' पन्थानं 'प्ररत्सि' प्रकृष्टं विलिख, कुरु इति ।

---

(क) अनुष्टुब् गायत्रैः । पि० छ० ३।२३ अष्टाक्षरैः पादैश्चतुष्पाच्छन्दोऽनुष्टुप् संज्ञं भवति ।

(ख) ऋ० ४।१।२ 'प्र णो राया परीणसा' ।

(ग) अधृतमप्रतिहतं गमनं यस्येति, अधृताऽनिवारिता गावो रश्मयो यस्येति ।

**निरुक्तम्।** द्युम्नमिति धननाम ॥ ३।८।९ ॥ द्युम्नं द्योततेर्यशो वा अन्नं वा ॥ ५।५।८ ॥ अग्निरप्यभिगुरुच्यते। अध्वगमनकर्मवन् ॥ ५।११।२ ॥

## अथ द्वितीया।

वामदेवो भरद्वाजो वा ऋषिः। एकं बृहन्नामकं सामाग्निदेवताकम् (बृहच्चाग्नेयम्। श्रा० ब्रा०) अनुष्टुप्। अग्निः। अग्न्याधाने विनियोगः।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
**यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः।**
३ १ २ ३ १ २ ३ १र २ २ ३ १ २
**आजुह्वद्धव्यमानुषक् शर्म्म भक्षीत दैव्यम् ॥ ८२ ॥**

**पदपाठः।** यदि अ०। वीरः १। अनु अ०। स्यात् क्रि०। अग्निम् २। इन्धीत क्रि०। मर्त्यः १। आजुह्वत् क्रि०। हव्यम् २। आनुषक् अ०। शर्म २। भक्षीत क्रि०। दैव्यम् २।

**अन्वयः।** यदि मर्त्यः अग्निम् इन्धीत, अनु आनुषक् आजुह्वत् [तर्हि स] वीरः स्यात्, दैव्यं शर्म च भक्षीत।

**भाष्यम्।** 'यदि' 'मर्त्यः' मनुष्यः 'अग्निं' भौतिकं परमात्मानं वा 'इन्धीत' प्रदीपयेत् ध्यायेद् वा 'अनु' तदनु 'आनुषक्' निरन्तरम् 'आजुह्वत्' तस्मिन्नग्नौ सम्यग् जुहुयात्, तं परमात्मानं सम्यगुपासीद्वा तर्हि स 'वीरः' धर्मवीरः 'स्यात्' भवेत् 'दैव्यं' दिव्यं 'शर्म' सुखं च 'भक्षीत' लभेत।

**निरुक्तम्।** आनुषगिति नामानुपूर्वस्यानुषक्तं भवति ॥६।१४।४॥

## अथ तृतीया।

भरद्वाज ऋषिः। यामं साम (यामं च। श्रा० ब्रा०) अनुष्टुप्।

अग्निः। विनियोगस्तु धूम उदिते त्वेषस्ते धूम ऋण्वतीति । लाट्यायन श्रौतसूत्रे ।

३ १ २ ३ १ २ ३ २उ १र २र
त्वेषस्ते धूम ऋण्वति दिवि सञ्छुक्र आततः ।
३ २उ ३ २उ ३ १ २ ३ १ २
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥८३॥ (क)

**पदपाठः** । त्वेषः ६ । ते ६ । धूमः १ । ऋण्वति क्रि० । दिवि ७ । सन् १ । शुक्रः १ । आततः १ । सूरः १ । न अ० । हि अ० । द्युता ३ । त्वम् १ । कृपा ३ । पावक सं० । रोचसे क्रि० ।

**अन्वयः** । हे पावक [ अग्ने ! ] त्वेषः (=त्वेषस्य) ते शुक्रः धूमः दिवि आततः सन् ऋण्वति, सूरः न कृपा (=कृपया) द्युता हि त्वं रोचसे ।

**भाष्यम्** । हे 'पावक' पवित्रकर्त्तः ! अग्ने भौतिक ! परमात्मन् ! वा 'त्वेषः' दीप्तस्य 'ते' तव 'शुक्रः' शुद्धिकरः 'धूमः', धूमवत्प्रज्ञापको गुणः धुनोति कम्पयति दुष्टान् यः स 'दिवि' अन्तरिक्षे, दिव्यगुणेषु वा 'आततः' विस्तृतः 'सन्' 'ऋण्वति' मेघात्मना परिणतो गच्छति, प्रकाशते वा ; 'सूरः न' सूर्य इव 'कृपा' कृपया समर्थया 'द्युता' दीप्त्या 'हि' नूनं 'त्वं' 'रोचसे' दीप्यसे ।

**निरुक्तम्** । ऋण्वतीति गतिकर्मसु ॥ २।१४।१४ ॥ रोचसे सन्दृश्यसे ॥ ३।११।२ ॥ कृप् कृपते र्वा कल्पते र्वा ६।८।६ ॥

## अथ चतुर्थी ।

भरद्वाज ऋषिः । बृहन्नामकं सामाग्निदेवताकं ( बृहच्चैवाग्नेयम् । आ० ब्रा० ) अनुष्टुप् । अग्निः । विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च ।

---

(क) ऋ० ४।५।२ ॥

१र २र३ १र २र ३ १र २र
त्वꣳ हि चैतवद्यशोग्ने ! मित्रो न पत्यसे ।
१ २ ३ २ ३ १ २ ३ १र २र २र
त्वं विचर्षणे ! श्रवो वसो ! पुष्टिं न पुष्यसि ॥८४॥ (क)

**पदपाठः ।** त्वम् १। हि अ०। चैतवत् २। यशः २। अग्ने सं०। मित्रः १। न अ०। पत्यसे क्रि०। त्वम् १। विचर्षणे सं०। श्रवः २। वसो सं०। पुष्टिम् २। न अ०। पुष्यसि क्रि०।

**अन्वयः ।** हे विचर्षणे ! वसो ! अग्ने ! त्वं हि चैतवत् यशः मित्रः न पत्यसे, त्वं श्रवः पुष्टिं न पुष्यसि ।

**आधियाज्ञिकम् ।** हे 'विचर्षणे' सर्वसाक्षिन् 'वसो' धनप्रद 'अग्ने' ! 'त्वं' 'हि' 'चैतवत्' चितये हितं चैतं तद्वत् तद्युक्तं 'यशः' अन्नं 'मित्रः' 'न' सूर्य इव 'पत्यसे' तस्य ईशिषे, अधिकारित्वेन वर्त्तसे ; 'त्वं' 'श्रवः' तदेवान्नं 'पुष्टिं न' पोषणमिव 'पुष्यसि' वर्द्धयसि । यथा सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविस्तथाग्नौ हुतमन्नादिकं भूयसीं वृद्धिं प्राप्य पुनरुत्पद्यते ।

**आध्यात्मिकम् ।** हे 'विचर्षणे' विशेषेण सर्वस्य द्रष्टः ! 'वसो' जगतामाधारभूत ! 'अग्ने' परमात्मन् ! 'त्वं' 'हि' 'चैतवत् यशः पत्यसे' चितिहितकारिणोऽन्नस्य पतिमिवाचरसि स्वामी भवसि त्वत्कृपया वयमेतत् प्राप्नुमः। अत्र दृष्टान्तमाह—'मित्रः न' यथा सूर्यः इति। 'त्वं' 'श्रवः' तदेवान्नं 'पुष्टिं न' पोषणमिव 'पुष्यसि' वर्द्धयसि ।

**निरुक्तम् ।** यश इत्यन्न नाम ॥३।९।४॥ यश इति धननाम ३।९।८॥ पत्यते इति ऐश्वर्यकर्मा॥ ३।११।३॥ विचर्षणिः इति पश्यतिकर्मा॥ ३।१३।२०॥ श्रव इति धननाम॥ ३।९।८॥ श्रव इत्यन्ननाम श्रूयते इति सतः ॥१०।३।१॥ श्रवः श्रवणीयं यशः ॥११।९।१॥

---

(क) ऋ० ४।५।१॥

## अथ पञ्चमी ।

मृत्तावाङ्गा इति ऋषिः । एकं साम बृहतः कौमुदस्य कुमुदस्यर्षेरपत्यस्य°( बृहतश्च कौमुदस्य साम । आ० ब्रा० ) अनुष्टुप् । अग्निः । प्रातरनुवाके अश्विनशस्त्रे च विनियोगः ।

१ २ ३ २ २ ३ २ ३ १ २ ३ १ २
**प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः ।**

३ २ ३ १ २ ३ १र २र ३ १ २
**विश्वे यस्मिन्नमर्त्ये हव्यं मर्त्तास इन्धते ॥ ८५ ॥ (क)**

**पदपाठः ।** प्रातः अ० । अग्निः १ । पुरुप्रियः १ । विशः १ । स्तवेत क्रि० । अतिथिः १ । विश्वे १ । यस्मिन् ७ । अमर्त्ये ७ । हव्यम् २ । मर्त्तासः १ । इन्धते क्रि० ।

**अन्वयः ।** विश्वे मर्त्तासः यस्मिन् अमर्त्ये [अग्नौ] हव्यम् इन्धते पुरुप्रियः विशः अतिथिः [सः] अग्निः प्रातः [यजनशीलैः] स्तवेत (=स्तूयेत)।

**भाष्यम् ।** 'विश्वे' सर्वे 'मर्त्तासः' मनुष्याः 'यस्मिन्' 'अमर्त्ये' अविनाशिनि अग्नौ परमात्मनि वा 'हव्यं' हविः दातव्यं शुभकर्मफलं वा 'इन्धते' दधते समर्पयन्ति वा 'पुरुप्रियः' बहुप्रियः 'विशः' यजमाने धनस्य निवेशकः'(ख) 'अतिथिः' सततगमनशीलः सः 'अग्निः' भौतिकः परमात्मा वा 'प्रातः' प्रातःकाले 'स्तवेत' यजनशीलैः स्तूयेत ।

## अथ षष्ठी ।

आत्रेया वसूयव ऋषयः । द्वे सामनी यद्वादिष्ठीये यन्मण्ंहिष्ठीये वाग्निर्ऋषिः ( अग्ने र्यद्वाहिष्ठीये द्वे यन्मण्ंहिष्ठीये वा । आ० ब्रा० )

---

° (क) ऋ० ४।१।१० ॥ 'विश्वानि यो अमर्त्यो हव्या मर्त्तेषु रण्यति' ।

(ख) यद्वा 'विशः' सर्वस्याः प्रजायाः 'अतिथिः' पूज्यः ।

अनुष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः विशेषेण तु अश्वमेधयागस्य पौष्णेष्टौ स्विष्टकृत्प्रकरणे याज्यारूपेण।

१र २र ३ २ ३ १ २ ३ १ २
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो।
१ २ ३ २ ३२उ ३ १ २
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते॥ ८६॥ (क)

**पदपाठः।** यत् २। वाहिष्ठम् १। तत् २। अग्नये ४। बृहत् २। अर्च क्रि०। विभावसो सं०। महिषी १। इव अ०। त्वत् ५। रयिः १। त्वत् ५। वाजाः १। उदीरते क्रि०।

**अन्वयः।** यत् वाहिष्ठं [स्तोत्रं] तत् अग्नये [क्रियते], हे विभावसो! बृहत् [धनमन्नं च अस्मभ्यम्] अर्च, महिषी इव त्वत् रयिः त्वत् वाजाः उदीरते।

**भाष्यम्।** 'यत्' 'वाहिष्ठं' वोढृतमं स्तोत्रं 'तत्' 'अग्नये' भौतिकाय परमात्मने वा क्रियते, हे 'विभावसो' प्रभाधन! स्वप्रकाश! वा 'बृहत्' महत् धनमन्नं चास्मभ्यम् 'अर्च' प्रयच्छ। 'महिषी' महत् 'इव त्वत्' तव सकाशात् 'रयिः' धनं 'त्वत्' तव सकाशात् 'वाजाः' अन्नानि बलानि च 'उदीरते' उद्गच्छन्ति, उत्कृष्टं प्रादुर्भवन्ति।

**निरुक्तम्।** वाहिष्ठो वोढृतमः॥ ५।१।२॥

## अथ सप्तमी।

गोपवनः सप्तवध्रिर्वा ऋषिः। एकं विशोविशीयं सामग्निर्ऋषिः, ऐड, मिड़ा-पुष्टि-रत्नं तद्युक्तं शार्गमेतन्नामकम् (अग्ने विंशोविशीय-मैडं वा शार्गम्। आ० ब्रा०) अनुष्टुप्। अग्निः। व्योमविश्वदेवस्तुद्यागी पञ्चशारदीयप्रकरणे आज्यशस्त्ररूपेण विनियोगः।

(क) ऋ० ४।१।१८॥ यजुः २६।१२॥

३ १ २ ३ १ २ ३ १ २ ३ २
विशो विशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥८७॥ (क)

**पदपाठः ।** विशः ६ । विशः ६ । वः २ । अतिथिम् २ । वाजयन्तः १ । पुरुप्रियम् २ । अग्निम् २ । वः ४ । दुर्यम् २ । वचः १ । स्तुषे क्रि० । शूषस्य ६ । मन्मभिः ३ ।

**अन्वयः ।** [ हे मनुष्याः ! ] वः (=यूयं) वाजयन्तः विशः विशः पुरुप्रियम् अतिथिं दुर्यम् अग्निं [परिचरत]। [अहमपि] शूषस्य [लाभाय] मन्मभिः वचः ( =वचोभिः ) वः ( =युष्मभ्यं ) [तमग्निं] स्तुषे ।

**भाष्यम् ।** हे मनुष्याः ! 'वः' यूयं विभक्तिव्यत्ययः 'वाजयन्तः' अन्नं बलं चेच्छन्तः 'विशः विशः' सर्वस्याः प्रजायाः 'पुरुप्रियं' बहुप्रियम् 'अतिथिं' तद्वत्पूज्यं 'दुर्यं' गृहहितम् 'अग्निं' भौतिकं परमात्मानं वा परिचरत इति शेषः। अहमपि ऋत्विगुपासको वा 'शूषस्य' सुखस्य' लाभाय 'मन्मभिः' मननीयैर्मन्त्ररूपैः 'वचः' वचोभिः, विभक्तिव्यत्ययः 'वः' युष्मदर्थं तमग्निं 'स्तुषे' स्तौमि ।

**निरुक्तम् ।** दुर्या इति गृहनाम ॥ ३।१३।८ ॥ शूषमिति बलनाम ॥ ३।९।७ ॥ शूषमिति सुखनाम ॥ ३।१३।११ ॥ मन्म मन्त्रः ६।२२।३ ॥ मन्मानि मननानि ॥ ८।६।२ ॥

## अथाष्टमी ।

आत्रेयः पुरुऋषिः। द्वे सामनी कनीनिके प्रजापतिर्ऋषिरत्रिर्वा ( प्रजापतेश्च कनीनिके द्वे अत्रे र्वा। आ० ब्रा० ।) अनुष्टुप्। अग्निः। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

---

(क) ऋ० ८।७४।१ ॥

३ २उ ३ २ ३ १र २र ३ २ ३ १ २
बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
३ १र २ २र १ २ ३ २ ३ २
यं मित्रं न प्रशस्तये मर्त्तासो दधिरे पुरः ॥८८॥ (क)

**पदपाठः ।** बृहत् २ । वयः २ । हि अ० । भानवे ४ । अर्चा क्रि० । देवाय ४ । अग्नये ४ । यम् २ । मित्रम् २ । न अ० । प्रशस्तये ४ । मर्त्तासः १ । दधिरे क्रि० । पुरः अ० ।

**अन्वयः ।** मर्त्तासः मित्रं न यं प्रशस्तये पुरः दधिरे [तस्मै] भानवे देवाय अग्नये हि बृहत् वयः अर्चा ।

**भाष्यम् ।** हे स्तोतः! 'मर्त्तासः' मननशीला मनुष्याः 'मित्रं न' बन्धुमिव 'यम्' अग्निं 'प्रशस्तये' प्रकृष्टस्तुतये 'पुरःदधिरे' पुरस्कुर्वन्ति, सम्मुखे उत्तरवेद्यामादधति आराधनकाले साक्षात्कुर्वन्ति वा तस्मै 'भानवे' दीप्तिमते 'देवाय' दिव्यगुणयुक्ताय 'अग्नये' भौतिकाय परमात्मने वा 'बृहत्' महत् 'वयः' हवीरूपमन्नं प्रेम वा 'अर्चा' प्रयच्छ ।

## अथ नवमी ।

आत्रेयः पुरुऋषिः । एकं साम श्रौतर्वणं ( श्रौतर्वणञ्च । आ० ब्रा० ) अनुष्टुप् । अग्निः । प्रातरनुवाके आश्विनशस्त्रे च विनियोगः ।

१ २ ३ १ २ ३ १ २ ३ १र २र
अगन्म वृत्रहन्तमं ज्येष्ठ मग्निमानवम् ।
१ २ ३ २ ३ २ ३ १ २ ३ १ २
यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥ ८९ ॥ (ख)

---

(क) ऋ० ४।१।८ ॥

(ख) ऋ० ८।५।२१ ॥ 'आगन्म' 'यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते' ।

**पदपाठः** । अगन्म क्रि० । वृत्रहन्तमम् २ । ज्येष्ठम् २ । अग्निम् २ । आनवम् २ । यः १ । स्म अ० । श्रुतर्वन् ७ । आर्क्षे ७ । बृहदनीके ७ । इध्यते क्रि० ।

**अन्वयः** । यः श्रुतर्वन् आर्क्षे बृहदनीके इध्यते स्म (=पादपूरणार्थकम्) वृत्रहन्तमं ज्येष्ठम् आनवं तम् अग्निम् अगन्म ।

**भाष्यम्** । 'यः' 'श्रुतर्वन्' सप्तमीविभक्तेर्लुक्, श्रुतः प्रसिद्धः अर्वा अश्वः व्यापककिरणः यस्य तस्मिन् सूर्ये 'आर्क्षे' ऋक्षा नक्षत्रास्तन्मये 'बृहदनीके' बृहतां तेजसां समूहे विराट् स्वरूपे वा 'इध्यते' प्रकाशते 'वृत्रहन्तमं' रोगपापादीनामतिशयेन हन्तारं 'ज्येष्ठं' प्रशंसनीयम् 'आनवम्' अनवो मनुष्यास्तेषां हितकरं तम् 'अग्निं' भौतिकं परमात्मानं वा 'अगन्म' प्राप्नुमः उपगच्छामः ।

**निरुक्तम्** । अर्वा इति अश्वनाम ॥ २।२७।२ ॥ अनव इति मनुष्यनाम ॥ ३।७।१ ॥ ऋक्षा इति नक्षत्राणाम् ॥ ३।२०।६ ॥

## अथ दशमी ।

वामदेव ऋषिः कश्यपो मनुर्वा उभौ वा । एकं साम स्वयोनिनामकं कश्यपस्यर्षिः, इन्द्रियनामकं सामिन्द्रस्यर्षिर्वा, यद्वेन्द्र ऋषिः प्रियनामकं साम (कश्यपस्य च स्वयोनीन्द्रस्य वेन्द्रियमिन्द्रस्य वा प्रियम् । आ० ब्रा०) अनुष्टुप् । अग्निः । अग्न्याधानप्रकरणेऽग्निस्तुतौ विनियोगः ।

२ १र २र ३ १ २ ३ २ ३ १ २ ३ १ २
**जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः ।**
३ २उ ३ १ २ ३ १ ३२ ३ १र २र ३ १
**पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥९०॥**

**पदपाठः** । जातः १ । परेण ३ । धर्मणा ३ । यत् १ । सवृद्भिः ३ । सह अ० । अभुवः क्रि० । पिता १ । यत् १ ।

कश्यपस्य ६। अग्निः १। श्रद्धा १। माता १। मनुः १। कविः १।

**अन्वयः।** यत् (=यः) अग्निः कश्यपस्य पिता, यत् (=यः) [च] सद्भिः सह परेण धर्मणा जातः अभुवः, [तस्याग्नेः] श्रद्धा मनुः कविः [च] माता [भवति]।

**भाष्यम्।** 'यत्' यः, लिङ्गव्यत्ययः 'अग्निः' भौतिकः परमात्मा वा 'कश्यपस्य' सर्वपश्यकस्य सूर्यस्य 'पिता' यज्ञाहुतिभिः पालकः, कारणत्वाज्जनको वा, 'यत्' यः च 'सद्भिः' सहवर्त्तिभिः ऋत्विग्भिः 'सह' 'परेण' श्रेष्ठतमेन 'धर्मणा' कर्मणा यज्ञेनेति 'जातः अभुवः' उत्पन्नो भवति, तस्याग्नेः 'श्रद्धा' निष्ठा, आस्तिकबुद्धिः (क) 'मनुः कविः' मननशीलः क्रान्तदर्शी वेदज्ञः पुरुषश्च 'माता' यज्ञानुष्ठानेन निर्माता मान्यकारी, रक्षको वा भवति।

## अथ व्याकरणम्।

अगन्म (८९)—गमेश्छान्दसे लुङि 'मन्त्रे घस०' २।४।८० इति च्लेर्लुकि 'मो नो धातोः' ८।२।६४ 'म्वोश्च' ८।२।६५ इति नकारे रूपम्।

अघ्रिगो (८१)—अधृता गावो यस्य। अघ्रि (न-धृ-क्रि) गुः गूः (गम कु डिच् ऊङादेशो वा) सं०।

अर्च (८६)—'अर्च' पूजायाम् भ्वा०।

आजुह्वत् (८२)—आङ् पूर्वाज्जुहोतेः व्यत्ययेन शतृ-प्रत्ययः सुलोपः।

आततः (८३)—आ + तनु + क्तः।

आनवम् (८६)—अनप्राणने 'अणश्च' उ० १।८ इति बाहुलकादुः। अनन्तीत्यनवः। 'तस्मै हितम्' इति अण्।

---

(क) श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि॥ ऋ० ८।८।९॥

नाश्रद्दधानाय हवि र्जुषन्ति देवाः॥ अश्रद्धामनृते दधा श्रद्धां सत्ये प्रजापतिः॥

आनुषक् (८२)—आ + अनु ( 'षञ्ज सङ्गे' भ्वा० ) + क्विप्, सर्वलोपः। 'अनिदितां हल०' ६।४।२४ इति नलोपः। अव्ययम्।

आर्चं (८९)—ऋषति गच्छतीति ऋचः। 'स्नन्न०' उ० ३।६६ सः कित् च। 'तस्येदम्' इत्यण्।

उदीरते (८६)—उत् + 'ईर' गतौ कम्पने च अ० लट् शपो लुक् 'अदभ्यस्तात्' ७।१।४ इत्यदादेशः।

ऋखति (८३)—रिवि गतौ भ्वा० रिखति, व्यत्ययेन सम्प्रसारणम्, इदित्वान्नुम्।

ओजिष्ठम् (८१)—अतिशयेन ओजस्वीति, इष्ठन्। 'विन्मतोर्लुक्' ६।३।६५ इति विनोलुक्।

कश्यपस्य (९०)—कश उदकं, तदेवेति कश्यम् 'अघ्न्यादयश्च' उ० ४।११२ इति यक्। तत्पिबति शोषयतीति॥ यद्वा पश्यति दर्शयतीति पश्यकः। वर्णविपर्ययः। महाभा०। तस्य।

कृपा (८३)—'कृप' कृपायां गतौ भ्वा० 'कृपेः सम्प्रसारणं चे'ति भिदादिपाठादङ् टाप्। विभक्तेर्लुक्।

चैतवत् (८४)—चि निवासगत्योः भ्वा० क्विच्। चितये हितं चैतं तद्वत्। अण् वतुप् च। व्यत्ययेन २या।

ज्येष्ठम् (८९)—'ज्य च' ५।३।६१ इति प्रशस्यस्य ज्य आदेशः। अतिशयार्थे इष्ठन्। २या।

त्विषः (८६)—'त्विष्' दीप्तौ भ्वा० + घञ्। विभक्तेर्लुक्।

दुर्यम् (८७)—दुर्वी हिंसार्थः भ्वा०। अघ्न्यादित्वाद्यत्प्रत्यये वकारलोपे दीर्घाभावश्च। दुः पूर्वात् यातेः 'घञर्थे कविधानम्' वा० इति कः।

द्युता (८३)—द्युत दीप्तौ भ्वा० + क्विप्। तया।

द्युम्नम् (८१)—दिवं मनति ( म्ना अभ्यासे) आतोऽनुपसर्गे इति कः।

धर्मणा (९०)—'अर्तिस्तु०' उ० १।१४० इति मन्। भ्रियते सुखप्राप्तये सेव्यते तत् धर्म तेन।

धूमः (८३)—'इषि युधी०' उ० १।१४५ इति मक्। धूञ् कम्पने स्वा० क्र्या०।

पत्यसे (८४)—पत्यते इत्यैश्वर्यकर्मा नैरुक्तो धातुः।

पनीयसे (८१)—पनायति + तृच् + ईयसुन्। तृलोपः। तस्मै।

पन्याम् (८१)—'पतः स्थ च' उ० ४।१२ इतीनिः णित् च। णित्वाद्वृद्धिः। पन्यानम्।

पिता (८०)—पातीति। नप्तृनेष्टृ० इति साधुः।

पुरुप्रियः (८५)—पुरुः बहुः प्रियः। कर्मधा०।

पुष्टिम् (८४)—पुष्यतेः क्तिन्।

पुष्यसि (८४)—लटि सिपि।

प्रद्रत्सि (८१)—प्र + रद विलेखने भ्वा० शपो लुक् सत्सिवत् [१८०]।

भक्षीत (८२)—'भक्ष' भ्वा० उ० लिङि।

मन्मभिः (८७)—मननं मत् ( मन ज्ञाने दि० ) सम्पदादित्वात् क्विप्। 'गमादीनामितिवक्तव्यम्' वा० ६।४।४० इति नलोपः। 'ह्रस्वस्य०' ६।१।७१ इति तुक्। मन्यत इति मन्मन् 'अन्येभ्योऽपि दृश्यन्ते' ३।२।७५ इति मनिन्। तैः।

महिषी (८६)—महिषः [७द] टित्वात् 'टिड्ढाणञ्' ४।१।१५ इति ङीप्। १मा।

यशः (८४)—सुयशस्तरम् [४द] व्यत्ययेन षष्ठीस्थाने द्वितीया।

यदि (८२)—यततेः इन्। तस्य दः। अव्ययम्।

वाजयन्तः (८७)—वाजयति [७द] धातोः शतृः। १मा बहुव०।

वाहिष्ठम् ( ८६)—वाहयति प्रापयति इष्टमिति वाहयितृ, वहेर्ण्यन्तात्तृच्। अत्यन्तं वाहयितृ इति वाहिष्ठम्। 'अतिशायने०' ५।३।५५ इत्यनुवृत्तौ 'तुश्छन्दसि' ५।३।५९ इतीष्ठनि परे 'तुरिष्ठेमेयःसु' ६।४।१५४ इति च तृचो लोपः। १मा।

विचर्षणे (८४)—'कृष' विलखने भ्वा०। विपूर्वादस्मात् 'कृषे रादेश्च चः' उ० २।१०४ इत्यनिप्रत्ययः कस्य चः। सं०।

विभावसो (८६)—विभा ( वि + भा + क्विप् ) प्रभा वसु धनं यस्य तत्संबुद्धौ।

विशः (८५)—विशतेः कः। धनस्य निवेशकः।

वृत्रहन्तमम् (८६)—वृत्रं [१द] हन्तीति वृत्रहन् 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ३।२।८७ तदन्तात् अतिशायनिकस्तमप्। 'नाद्घस्य' ८।२।१७ नान्तात्परस्य घस्य नुट्। अतिशयेन वृत्रं हन्तीति वृत्रहन्तमस्तम्।

बृहदनीके (८९)—बृहतां तेजसामनीके ('अनिहृषिभ्यां किच्च' उ० ४।१७ इति अन प्राणने धातोः कीकन् )।

शुषस्य (८७)—शुष शोषणे दि० ऊष प्रत्ययः 'ऋहनि०' उ० ४।७३ इति वत्।

श्रद्धा (९०)—श्रत् सत्यं तस्मिन्धीयते। श्रदन्तरोरुपसर्गवद्वृत्तिः वा० ३।३।१०६ इत्यङ्, टाप्।

श्रवः (८४)—शृणोतेः कर्मण्यसुन्।

श्रुतर्वन् (८९) अर्वा 'ऋ' भ्वा० 'स्नामदि०' उ० ४।११३ इति वनिप्। अर्त्तेरन्तर्णीतण्यर्थाद्वा अन्येभ्योऽपीति वनिनि रूपम्। श्रुतः अर्वा यस्य तस्मिन्। सुपां सुलुगिति विभक्तेर्लुक्।

सहद्भिः (९०)—सह + वृतु + क्विप्। तैः।

सूरः (८३)—'सु सू धाञ्०' उ० २।२४ इति क्रन्। सूयते वा सुवति प्राणिनः।

सूवेत (८५)—सूयेत।

इति नवमी दशतिर्नवमः खण्डश्च।

---

प्रथमम् ( आग्नेयं ) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। दशमः खण्डः। दशमी दशतिः।

## अथ प्रथमा।

तापस नाम्ना प्रसिद्धोऽग्नि ऋषिः। बार्हस्पत्यं साम बृहस्पति-ऋषिः ( बार्हस्पत्यश्च। आ० ब्रा० ) अनुष्टुप्। विश्वेदेवा देवताः। महाव्रतयागेऽग्निमारुतशस्त्ररूपेण विनियोगः।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
**सोमꣳ राजानं वरुणमग्नि मन्वारभामहे।**
३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
**आदित्यं विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम्॥९१॥ (क)**

**पदपाठः।** सोमम् २। राजानम् २। वरुणम् २। अग्निम् २। अन्वारभामहे क्रि०। आदित्यम् २। विष्णुम् २। सूर्यम् २। ब्रह्माणम् २। च अ०। बृहस्पतिम् २।

**अन्वयः।** सोमं राजानं वरुणम् आदित्यं विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं च अग्निम् अन्वारभामहे।

**भाष्यम्।** 'सोमं' सर्वजगदुत्पादकं 'राजानं' प्रकाशमानं 'वरुणं' वरणीयम् 'आदित्यं' नाशरहितं 'विष्णुं' व्यापकं 'सूर्यं' सर्वस्यप्रेरकं 'ब्रह्माणं' महान्तं 'बृहस्पतिं' वेदपतिं 'च' 'अग्निम्' अग्रणीं परमात्मानम् 'अन्वा रभामहे' रक्षणार्थमाह्वयामहे।

**निरुक्तम्** राजा राजतेः॥ २।३।१॥ बृहस्पति बृहतः पाता वा पालयिता वा॥ १०।११।२॥

(क) ऋ० ८।७।२९॥ राजानमवसेऽग्निं गीर्भिर्हवामहे' आदित्यान्'।

## अथ द्वितीया ।

वामदेव ऋषिः । एकं सामारूढ़शब्दयुक्तमङ्गिरसां स्वभूतं (साम्नि उदारुहन्निति विद्यमानत्वात्) अथवा यामं साम यमेन दृष्टं, यमोऽग्निस्तद्देवताकं वा (आरूढ़वच्चाङ्गिरसं यामं वा । आ० ब्रा०) अनुष्टुप् । अङ्गिरसो देवता: । प्रैषरूपेण विनियोगः ।

३ ३२ ३१ २ ३२ ३१र २र
**इत एत उदारुहन् दिवः पृष्ठान्यारुहन् ।**
२ ३२ ३ १२ ३१ २र
**प्र भूर्जयो यथा पथो द्यामङ्गिरसो ययुः ॥ ९२ ॥ (क)**

**पदपाठः ।** इतः अ० । एते १ । उदारुहन् क्रि० । दिवः ६ । पृष्ठानि २ । आरुहन् क्रि० । प्र अ० । भूर्जयः १ । यथा अ० । पथः २ । द्याम् २ । अङ्गिरसः १ । ययुः क्रि० ।

**अन्वयः ।** एते अङ्गिरसः इतः दिवः पृष्ठानि आरुहन् [ततः] द्यां प्रययुः, यथा भूर्जयः (=भूर्जयाः) पथः उदारुहन् ॥ एते अङ्गिरसः द्यां प्रययुः, इतः दिवः पृष्ठानि आरुहन्, [ततः] उदारुहन्, यथा भूर्जयः (=भूर्जयाः) पथः [गच्छन्ति] ।

**आधियाज्ञिकम् ।** 'एते' 'अङ्गिरसः' अग्नेरङ्गाराः 'इतः' पृथिव्याः सकाशात् 'दिवः पृष्ठानि' आकाशस्य पृष्ठस्थानानि 'आरुहन्' आरोहन्ति, ततः 'द्यां' द्युलोकं 'प्रययुः' प्रयान्ति । अत्र दृष्टान्त-माह, 'यथा' 'भूर्जयः' भुवो जेतारः 'पथः' परिष्कृतमार्गान् 'उदारुहन्' उद्गच्छन्ति ।

**आध्यात्मिकम् ।** 'एते' 'अङ्गिरसः' ब्रह्मवेत्तारः तपस्विनः 'द्याम्' अर्चिः 'प्रययुः' प्राप्नुवन्ति, 'इतः' अस्मात् 'दिवः पृष्ठानि'

---

(क) अथर्व० १८।१।११ ॥

द्युस्थानानि प्रकाशस्थानानि 'आरुहन्' गच्छन्ति, ततः 'उदारुहन्' उत्कृष्टं ब्रह्मलोकं प्राप्नुवन्ति। अत्र दृष्टान्तमाह, 'यथा' 'भूर्जयः' भुवो जेतारो राजानः 'पथः' परिष्कृतमार्गान् जयानन्तरं गच्छन्ति। (क)

## अथ तृतीया।

वामदेव ऋषिः। द्वे सामनी आसिते असित ऋषिः (आसिते द्वे। आ० ब्रा० ) अनुष्टुप्। अग्निः। प्रैषरूपेण विनियोगः।

२ १ २ ३ २ ३ १ २ ३ १ २
राये अग्ने महे त्वा दानाय समिधीमहि।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ईडिष्वा हि महे वृषन् द्यावा होत्राय पृथिवी ॥९३॥

**पदपाठः**। राये ४। अग्ने सं०। महे ४। त्वा २। दानाय ४। समिधीमहि क्रि०। ईडिष्वा क्रि०। हि अ०। महे ४। वृषन् सं०। द्यावापृथिवी २। होत्राय ४।

**अन्वयः**। हे वृषन्! अग्ने! महे राये त्वा [हविषः] दानाय समिधीमहि, [त्वञ्च] महे होत्राय हि द्यावापृथिवी (=द्यावापृथिव्यौ) ईडिष्वा।

**भाष्यम्**। हे 'वृषन्' कामाभिवर्षक 'अग्ने' भौतिक! परमात्मन्! वा 'महे राये' महते धनाय 'त्वा' त्वां हविषः पूजादिकस्य वा 'दानाय' 'समिधीमहि' सम्यक् प्रदीपयामः, सम्यग्ध्यायेम

---

(क) अस्मिन् मन्त्रे ब्रह्मवेतॄणां तपस्विनां ब्रह्मलोकगमनं दर्श्यते, इदमेव स्पष्टीकृतं यास्केन—'अथ ये हिंसामनृतमुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षादुदगयनम्, उदगयनाद्देवलोकं, देवलोकादादित्यम्, आदित्याद्वैद्युतं, वैद्युतान्मानसं, मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवन्ति'। नि० अ० १४। खं० ९॥

वा 'महे होत्राय' महते यज्ञाय हि 'द्यावापृथिवी' दिवं पृथिवीञ्च 'ईड़िष्वा' स्तुहि अनुकूलो भव, अव इति ॥ (क)

**निरुक्तम्।** वृषा वर्षिता ॥ ११।४७।१ ॥

## अथ चतुर्थी।

सोमाहुति ऋषिः। एकं त्वाष्ट्रो साम (त्वाष्ट्रो साम। आ० ग्रा०) अनुष्टुप्। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे आग्नेयक्रतौ च, आभिप्लविकद्वितीयाहे चतुर्विंशाहे वा आज्यशस्त्ररूपेण च।

२ २ ३ २ ३ २ ३ २ ३ २उ ३ २३ २
**दधन्वे वा यदीमनु वोचद् ब्रह्मेति वेरु तत्।**
२ ३ १ २ ३ १ २ ३ २ ३ १ २
**परि विश्वानि काव्या नेमिश्चक्र मिवाभुवत् ॥९४॥ (ख)**

**पदपाठः।** दधन्वे क्रि०। वा अ०। यत् २। ईम् २। अनु अ०। वोचत् क्रि०। ब्रह्म २। इति अ०। वेः क्रि०। उ अ०। तत् २। परि अ०। विश्वानि २। काव्या २। नेमिः १। चक्रम् २। इव अ०। अभुवत् क्रि०।

**अन्वयः।** [यजनशीलः] ईम् (=एनम्) अनु (=लक्षीकृत्य) यत् दधन्वे [यत्] ब्रह्म इति वा वोचत् [सोऽग्निः] तत् वेः उ, विश्वानि काव्या (=काव्यानि) परि अभुवत्, नेमिः चक्रम् इव।

**भाष्यम्।** यजनशीलः 'ईम्' एनमग्निं परमात्मानं वा 'अनु' लक्षीकृत्य 'यत्' यज्ञादिकं 'दधन्वे' धारयति यत् 'ब्रह्म' वेदरूपं स्तोत्रम् 'इति वा' 'वोचत्' वदति सोऽग्निरीश्वरो वा 'तत्' सर्वं 'वेः उ' जानाति स्वीकरोति, 'विश्वानि' सर्वाणि 'काव्या' काव्यानि

---

(क) ......'अव त्वं द्यावापृथिवी' यजुः २।८ ॥

(ख) ऋ० ८।५।२६ ॥ 'ब्रह्माणि' 'अभवत्' ॥

ऋत्विक्कर्म्माणि, सृष्टिरचनानि वा (क) 'परि अभुवत्' व्याप्नोति अधितिष्ठति। अत्र दृष्टान्तमाह,—'नेमिः चक्रम् इव' बहिर्वेष्टनवलयो रथाङ्गमिव।

## अथ पञ्चमी।

पायु ऋषिः। अगस्त्यस्य ऋषेः सम्बन्धि रक्षोघ्नं साम (अगस्त्यस्य च रक्षोघ्नम्। आ० ब्रा०) अनुष्टुप्। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च।

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १
**प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि।**

३ १ २ ३ २ ३ २ ३क २र ३क २र
**यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम्॥ ९५॥** (ख)

**पदपाठः।** प्रति अ०। अग्ने सं०। हरसा ३। हरः २। शृणाहि क्रि०। विश्वतः अ०। परि अ०। यातुधानस्य ६। रक्षसः ६। बलम् २। न्युब्ज क्रि०। वीर्यम् २।

**अन्वयः।** हे अग्ने! [त्वं] हरसा यातुधानस्य हरः बलं विश्वतः परि प्रतिशृणाहि, रक्षसः वीर्यं न्युब्ज [च]।

**भाष्यम्।** हे 'अग्ने' भौतिक! परमात्मन्! वा त्वं 'हरसा' स्वतेजसा 'यातुधानस्य' पीड़ादायकस्य शत्रोः रोगादेर्वा 'हरः' हरणशीलं 'बलं' 'विश्वतः परि' सर्वतः परिगतं 'प्रतिशृणाहि' नाशय। 'रक्षसः' बाधकस्य रोगादेर्वा 'वीर्यं' बलं 'न्युब्ज' भञ्जय च।

**निरुक्तम्।** हर इति क्रोधनाम॥ २।१३॥ हरो हरतेः॥ ४।१९।४॥ शृणातीति वधकर्मा॥ २।१०।४॥

---

(क) कवयो मेधाविनः ऋत्विजस्तत्सम्बन्धीनि कर्माणि, कविः क्रान्तदर्शन ईश्वरस्तत्सम्बन्धीनि कर्माणि विश्वरचनादीनि॥

(ख) ऋ० ८।४४।९॥ 'विरुज' 'प्रति'॥

## अथ षष्ठी ।

प्रस्कण्व ऋषिः । मानवं साम मनुना दृष्टं ( मानवं च । आ० ब्रा० ) अनुष्टुप् । अग्निः । विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च विशेषेण गर्गत्रिरात्रयागस्य शिष्टेऽहनि ।

१ २ ५ १ २ ३ २ ३ १ २ ३ २ ३ २
**त्वमग्ने वसूꣳ रिह रुद्राꣳ आदित्याꣳ उत ।**
१ २ ३ २उ ३ १ २ ३ ३ १ २
**यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ ९६ ॥ (क)**

**पदपाठः** । त्वम् १ । अग्ने सं० । वसून् २ । इह अ० । रुद्रान् २ । आदित्यान् २ । उत अ० । यजा क्रि० । स्वध्वरम् २ । जनम् २ । मनुजातम् २ । घृतप्रुषम् २ ।

**अन्वयः** । हे अग्ने ! त्वम् इह वसून् रुद्रान् आदित्यान् उत (= च) स्वध्वरं मनुजातं घृतप्रुषं जनं यजा ।

**आधियाज्ञिकम्** । हे 'अग्ने' यज्ञाग्ने ! 'त्वम्' 'इह' कर्मणि यज्ञे इति अष्ट 'वसून्' एकादश 'रुद्रान्' द्वादश 'आदित्यान्' 'उत' च 'स्वध्वरं' शोभनयागयुक्तं 'मनुजातं' परमात्मनोत्पादितं 'घृतप्रुषं' घृतस्य सेक्तारं 'जनं' यजनशीलं मनुष्यं 'यजा' यज सङ्गमय । यज्ञेन सर्वे देवास्तृप्यन्तीति भावः । ४८ मन्त्रो द्रष्टव्यः ।

**आध्यात्मिकम्** । हे 'अग्ने' परमात्मन् ! 'त्वम्' 'इह' कर्मणि यज्ञे इति 'वसून्' कृतचतुर्विंशतिवर्षब्रह्मचर्यान् पण्डितान् 'रुद्रान्' आचरितचतुश्चत्वारिंशद्वर्षब्रह्मचर्यान् महाबलान् 'आदित्यान्' समाचरिताष्टचत्वारिंशत्संवत्सरब्रह्मचर्यानखण्डितव्रतान् 'उत' अपि च 'स्वध्वरं' शोभनयज्ञं 'मनुजातं' मननशीलेन प्रजा-

---

(क) ऋ० १।४५।१ ॥

पतिनोत्पादितं 'घृतप्रुषं' ब्रह्मानन्दरसेन पुष्टं 'जनं' विद्वांसं मनुष्यं च 'यज' अस्माभिः सह सङ्गमय। (क)

## अथ व्याकरणम्।

अन्वारभामहे (९१)—अनु + आ + 'रभ' राभस्ये भ्वा० लट्।

अभुवत् (९४)—भवते र्लङि व्यत्ययेन शः। 'भूसुवो०' ७।३।८८ इति गुणप्रतिषेधः।

आदित्यम् (९१)—'दाप्' लवने अ० प० अनि०। अस्मात् 'स्त्रियां क्तिन्' ३।३।९४ इति क्तिन्। 'घुमास्था०' ६।४।६६ इति आत इः। ततो नञ्। अदितिशब्दात् 'दित्यदित्या०' ४।१।८५ इति ण्यः। 'तद्धितेष्वचामादेः' ७।२।११७ इति वृद्धिः॥ यद्वा आङ् पूर्वाद् दातेर्दीव्यतेर्वाऽन्नादित्वाद्यक् ( उ० ४।११२ ) आकारेकारयो रिकारः, दापस्तुक् दीव्यतेः पस्य तो निपात्यते॥ अदितेः पुत्रः, रसमादत्ते आदीप्यते वादित्यस्तम्।

इतः (९२)—'पञ्चम्यास्तसिल्' ५।३।७ 'इदम इश्' ५।३।३। अस्मात्। अव्ययम्।

ईम् (९४)—ई + मुच्। अव्ययम्।

उदारुहन् (९२)—उत् + आ + 'रुह' बीजजन्मप्रादुर्भावे च भ्वा० लङ्।

काव्या (९४)—कवेरिदं कर्म भावो वा 'गुणवचन०' ५।१।१२४ इति ष्यञ्। सुपां सुलुगिति डा।

घृतप्रुषम् (९६)—घृत + 'प्रुष' स्नेहनसेवनपूरणेषु क्र्या० क्विप्। घृतस्य पूरयिता सेवयिता वा घृतप्रुड् तम्।

---

(क) पुरुषो वाव यज्ञस्तस्य यानि चतुर्विꣳशतिवर्षाणि तत्प्रातःसवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रातः सवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति॥ अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यन्दिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयन्ति॥ अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदꣳ सर्वमाददते॥ छा० प्र० ३। खं० १६।१,३,५॥

चक्रम् (९४)—क्रियतेऽनेन। घञर्थे कः। 'के कृञः०' वा० ६।१।१२ इति द्वित्वम्। अर्द्धर्चादिः। यद्वा 'स्फायि०' इति रक्। 'चक' तृप्तौ प्रतिघाते च भ्वा०।

दधन्वे (९४)—'धवि' गतौ भ्वा० प० से० लिटि प्रथमैकवचने।

दानाय (९३)—ददाति अनेन। ल्युट्। दीयते इति। भावे कर्मणि वा ल्युट्। तस्मै।

द्यावापृथिवी (९३)—द्यौश्च पृथिवी च ते। दिवोद्यावा' ६।३।२९ इति द्यावादेशः।

नेमिः (९४)—नयतेः। 'नियो मिः' उ० ४।४३ इति मिः। गुणः।

न्युब्ज (९५)—निपूर्वादुब्जते र्लोटि।

भूर्जयः (९२)—भवतेः कर्त्तरि भावे वा क्विप्। जि जये अन्येभ्योऽपीति विच्, भूर्जयाः भुवो जेतारः।

यथा (९२)—'प्रकारवचने थाल्' ५।३।२३ येन प्रकारेण यथा।

राजानम् (९१)—राजतेः 'कनिन्युवृषि०' उ० १।१५६ इति कनिन्। राजते प्रकाशतेऽसौ राजा तम्।

वरुणम् (९१)—'कॄवॄ०' उ० ३।५३ इति उनन्। वृणोति व्रियते वासौ वरुणस्तम्।

विश्वतः (९५)—'पञ्चम्यास्तसिल्' ५।३।७ सर्वत इत्यर्थः।

विष्णुम् (९१)—'विष्लृ' व्याप्तौ जु०। 'विषेः किच्च' उ० ३।३९ इति नुः। वेवेष्टि व्याप्नोति चराचरं जगदिति विष्णुस्तम्।

वीर्यम् (९५)—'वीर' विक्रान्तौ चु०। 'ऋहलोर्ण्यत्' ३।१।१२४ इति ण्यत् बाहुलकात्। वीरयितुं योग्यमिति वीर्यम्।

वृषन् (९३)—'वृषु' सेचने भ्वा० 'कनिन्युवृषि०' उ० १।१५६ इति कनिन्। सं०

वृहस्पतिम् (९१)—'तद् वृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च' वा० ६।१।१५७।

वेः (९४)—अवेः। विदो लङि मध्यमैकवचने 'बहुलं छन्दस्यमाङ् योगेऽपि' ६।४।७५ इत्यडभावः।

वोचत् (९४)—अवोचत्।

शृणाहि (९५)—'शॄ' हिंसायाम् क्र्या०।

सोमम् (९१)—'अर्त्तिस्तु०' उ० १।१४० सवति ऐश्वर्यहेतुर्भवतीति सोमस्तम्।

हरसा (९५)—हरतेः सर्वधातुभ्योऽसुन्नित्यसुन्। हरतीति हरो बलं तेन।

होत्राय (९३)—'हु या०' उ० ४।१६८ इति त्रन्। हूयत इति होत्रं होम कर्म।

इति दशमी दशतिः दशमः खण्डश्च।

---

प्रथमम् ( आग्नेयं ) पर्व । प्रथमोऽध्यायः । प्रथमः प्रपाठकः । एकादशः खण्डः । एकादशी दशतिः ।

## अथ प्रथमा ।

दीर्घतमा ऋषिः । सामानि पञ्च, द्वे तौदे तोदो नामर्षिस्तेन दृष्टे, त्रीणि दैर्घतमसानि दीर्घतमसः स्वभूतानि, सर्वाणि पञ्च सामानि तौदानि, यद्वा सर्वाणि दैर्घतमसानि ( तौदे द्वे दैर्घतमसानि त्रीणि सर्वाणि वा तौदानि सर्वाणि वा दैर्घतमसानि । आ० ब्रा० )। उष्णिक् छन्दः (क) अग्निः । विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च ।

३ १ २ ३ १ २ ३ १ २ ३ १२ ३ २
**पुरु त्वा दाशिवाङ् वोचेऽरिरग्ने तव स्विदा ।**
३ १ २ ३ ३ १ २
**तोदस्येव शरण आ महस्य ॥ ९७ ॥ (ख)**

**पदपाठः** । पुरु २ । त्वा २ । दाशिवाङ् १ । वोचे क्रि० । अरिः १ । अग्ने सं० । तव ६ । स्वित् अ० । आ अ० । तोदस्य ६ । इव अ० । शरणे ७ । आ अ० । महस्य ६ ।

**अन्वयः** । हे अग्ने ! दाशिवाङ् अरिः [अहं] तव स्वित् आ शरणे त्वा पुरु वोचे, महस्य तोदस्य इव ।

**भाष्यम्** । हे 'अग्ने' यज्ञाग्ने ! परमात्मन् वा 'दाशिवाङ्' हविर्दाता, सर्वस्य दाता वा 'अरिः' परिचरणशीलः

---

(क) 'उष्णिग्गायत्रौ जागतश्च' पि० छ० ३।२८ यत्र गायत्रावष्टाक्षरौ पादौ जागतश्च द्वादशाक्षरः एवं त्रिभिः पादैरुष्णिङ् नाम छन्दो भवति ।

(ख) ऋ० ६।२।१९ ॥ 'दाश्वान्' ॥

अहं 'तव' 'स्वित् आ' एव 'शरणे' गृहे आश्रये इति 'त्वा' त्वां 'पुरु' बहु 'वोचे' स्तौमि। अत्र दृष्टान्तमाह, 'महस्य' महतः 'तोदस्य' शिक्षकस्य 'इव'।

**निरुक्तम्।** तोदस्तुद्यतेः॥ बहुदाश्वांस्त्वामेवाभिह्वयामि॥ अरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरेतस्मादेव। यदन्यदेवत्यां अग्नावाहुतयो हूयन्त इत्येतद्दृष्ट्वैवमवक्ष्यत्॥...तुदस्येव शरणेऽधिमहतः॥ ५।७।१॥ शरण इति गृहनाम॥ ३।१३।८॥

## अथ द्वितीया।

विश्वामित्र ऋषिः। द्वे सामनी प्रहिते, श्यावाश्वस्वर्षिः (श्यावाश्वस्य प्रहितौ द्वौ। आ० ब्रा०)। उष्णिक्। अग्निः। प्रातरनुवाके।

१ २र ३ २उ ३ १ २ ३ २

**प्र होत्रे पूर्व्यं वचोग्नये भरता बृहत्।**

३ १र २ २र ३ १ २ ३ २ ३ १ २

**विपां ज्योतीꣳषि बिभ्रते न वेधसे॥ ९८॥ (क)**

**पदपाठः।** प्र अ०। होत्रे ४। पूर्व्यम् २। वचः २। अग्नये ४। भरता क्रि०। बृहत् २। विपाम् ६। ज्योतींषि २। बिभ्रते ४। न अ०। वेधसे ४।

**अन्वयः।** [हे मनुष्याः! यूयं] विपां ज्योतींषि बिभ्रते वेधसे न होत्रे अग्नये पूर्व्यं बृहत् वचः प्रभरता।

**भाष्यम्।** हे मनुष्याः! यूयं 'विपां' विप्राणां मेधाविनां 'ज्योतींषि' सत्कर्माद्यनुष्ठानसम्पाद्यानि तेजांसि 'बिभ्रते' धारयते 'वेधसे न' यज्ञविधात्रे परमात्मने इव, ब्रह्मणे इव वा 'होत्रे' होम-

(क) ऋ०।३।१।७॥

निष्पादकाय सुखदात्रे वा 'अग्नये' भौतिकाय परमात्मने वा 'पूर्व्यं' सनातनं 'बृहत्' महत् 'वचः' सूक्तादिरूपं 'प्रभरता' प्रब्रूत।

**निरुक्तम्।** पूर्व्यमिति पुराणनाम ॥ ३।१९।२३ ॥

## अथ तृतीया।

गोतम ऋषिः। द्वे सामनी, (प्रजापतेः श्रुधीये द्वे श्रुद्धेत्र वा श्रद्धे वा सत्ये वा सामानी वा। आ० ब्रा०) उष्णिक्। अग्निः। प्रातरनुवाके।

३ १ २ ३ १ २ ३ १ २
**अग्ने वाजस्य गोमत ईशानः सहसो यहो।**
३ १ २ ३ २ ३ १ २
**अस्मे देहि जातवेदो महि श्रवः ॥ ९९ ॥ (क)**

**पदपाठः।** अग्ने सं०। वाजस्य ६। गोमतः ६। ईशानः १। सहसः ६। यहो सं०। अस्मे ४। देहि क्रि०। जातवेदः सं०। महि २। श्रवः २।

**अन्वयः।** हे सहसः यहो! अग्ने! [त्वं] गोमतः वाजस्य [च] ईशानः [असि] हे जातवेदः! महि श्रवः अस्मे देहि।

**भाष्यम्।** हे 'सहसः यहो' बलस्य पुत्र! आत्मबलस्य पालक वा 'अग्ने' भौतिक! परमात्मन्! वा त्वं 'गोमतः' गवादि-पशुमत्त्वस्य प्रकाशस्य ज्योतिषो वा 'वाजस्य' अन्नस्य विज्ञानस्य च 'ईशानः' ईश्वरः असि। हे 'जातवेदः' जातधन! सर्ववेदितः वा 'महि' प्रभूतं 'श्रवः' अन्नं, ज्ञानं वा 'अस्मे' अस्मभ्यं 'देहि'।

**निरुक्तम्।** यह्व इत्यपत्यनाम ॥ ३।१।२ ॥

---

(क) ऋ० १।५।२७ ॥ 'धेहि' ॥

## अथ चतुर्थी ।

विश्वामित्र ऋषिः । त्रीणि सामानि पूर्वस्य सदो नाम, उत्तरे द्वे हविर्धानसंज्ञके प्रजापतिश्चर्षिः । आ० ब्रा० । छन्दादिः पूर्ववत् ।

३ १ २ ३ २ ३ १
**अग्ने यजिष्ठो अध्वरे देवान् देवयते यज ।**
१ ३ १र २र २ ३ १ २
**होता मन्द्रो विराजस्यति स्रिधः ॥ १०० ॥ (क)**

**पदपाठः ।** अग्ने सं० । यजिष्ठः १ । अध्वरे ७ । देवान् २ । देवयते ४ । यज क्रि० । होता १ । मन्द्रः १ । विराजसि क्रि० । अति अ० । स्रिधः २ ।

**अन्वयः ।** हे अग्ने ! यजिष्ठः होता मन्द्रः [त्वम्] अध्वरे देवयते देवान् यज, [त्वञ्च] स्रिधः अति विराजसि ।

**भाष्यम् ।** हे 'अग्ने' भौतिक ! परमात्मन् ! वा 'यजिष्ठः' यष्टृतमः 'होता' होमनिष्पादकः 'मन्द्रः' आह्लादकः त्वम् 'अध्वरे' हिंसारहिते यज्ञे 'देवयते' दिव्यगुणकर्मस्वभावानिच्छते पुरुषाय 'देवान्' दिव्यगुणान् 'यज' सङ्गमय, त्वञ्च 'स्रिधः' चपरितॄन् रोगादीन् कामक्रोधादीन् शत्रून् वा 'अति' अतिक्रम्य 'विराजसि' विशेषेण दीप्यसे ।

## अथ पञ्चमी ।

त्रित ऋषिः । एकं साम त्वष्टुः स्वभूतमातिथ्यम् । आ० ब्रा० । छन्दादिः पूर्ववत् ।

---

(क) ऋ० ३।१।८ ॥

३ २ ३ २ ३ १र २ ३ १र ३ २र १ ३ २
जज्ञानः सप्त मातृभि र्मेधा माशासत श्रिये ।
३ १र ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणां चिकेतदा ॥ १०१ ॥ (क)

**पदपाठः** । जज्ञानः १ । सप्त १ । मातृभिः ३ । मेधाम् २ । आशासत क्रि० । श्रिये ४ । अयम् १ । ध्रुवः १ । रयीणाम् ६ । चिकेतत् क्रि० । आ अ० ।

**अन्वयः** । अयं ध्रुवः [अग्निः] सप्त (=सप्तभिः) मातृभिः सह जज्ञानः मेधां श्रिये आशासत, तथा रयीणाम् आचिकेतत् ।

**भाष्यम्** । 'अयं' 'ध्रुवः' नित्यः अग्निः परमात्मा वा 'सप्त' सप्तभिः 'मातृभिः' हविर्मानसमर्थाभिर्जिह्वाभिः (ख) यज्ञनिर्मातृभि-र्ऋत्विग्भि र्गायत्र्यादिच्छन्दोभि र्वा सह 'जज्ञानः' उत्पन्नः साक्षाद्भूतो वा 'मेधां' बुद्धिं 'श्रिये' अस्माकं कल्याणाय 'आशासत' अनुशास्ति । तथा 'रयीणां' धनानामन्नादिरूपाणाम् 'आचिकेतत्' प्रभवति ।

## अथ षष्ठी ।

इरिमिठि ऋषिः । अदितेः साम । आ० ब्रा० । उष्णिक् । अदितिः । विनियोगस्तु पूर्ववत् ।

२उ २ १ १ २
उत स्या नो दिवा मतिरदिति रूत्यागमत् ।
१र ३ २ ३ १ २
सा शन्ताता मयस्करदप स्रिधः ॥ १०२ ॥ (ग)

---

(क) ऋ० ७।५।४ ॥ 'जज्ञानं सप्त मातरो वेधामशासत' 'चिकेतयत्' ॥

(ख) काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वाः ॥ मुण्डक० १।२।४ ॥

(ग) ऋ० ८।१८।७ ॥ 'शन्तातिः' ॥

**पदपाठः।** उत अ०। स्या १। नः २। दिवा ४। मतिः १। अदितिः १। ऊत्या ३। आगमत् क्रि०। सा १। शन्ताता अ०। मयः २। करत् क्रि०। अप अ०। स्रिधः २।

**अन्वयः।** स्या मतिः अदितिः नः ऊत्या [सह] दिवा (=प्रकाशाय) आगमत् उत (=अपि च) सा शन्ताता मयः करत् स्रिधः अप [गमयतु च]।

**भाष्यम्।** 'स्या' सा 'मतिः' द्योतनात्मिका मेधा 'अदितिः' अखण्डनीया शक्तिः 'नः' अस्मान् 'ऊत्या' रक्षया सह 'दिवा' प्रकाशाय 'आगमत्' आगच्छतु, 'उत' अपि च 'सा' 'शन्ताता' शन्तातिः शान्तिकरं 'मयः' सुखं 'करोतु, 'स्रिधः' अविद्यादिशत्रून् 'अप' गमयतु च।

**निरुक्तम्।** अदितिरदीना देवमाता॥ ४।२२।१॥ अथातो मध्यमस्थानाः स्त्रियः॥ तासामदितिः प्रथमागामिनी भवति॥ ११।२२।१, २॥ मय इति सुखनाम॥ ३।१३।११॥

## अथ सप्तमी।

विश्वमना ऋषिः। वार्कजम्भं साम वृकजम्भा ऋषिः आ० ब्रा०। उष्णिक्। अग्निः। विनियोगस्तु पूर्ववत्।

१ २ ३ १ २ ३ २ २ ३ १ २
**ईड़िष्वा हि प्रतीव्या३ʼ यजस्व जातवेदसम्।**

३ १ २ ३ २ ३
**चरिष्णुधूम मगृभीतशोचिषम्॥ १०३॥** (क)

**पदपाठः।** ईड़िष्वा क्रि०। हि अ०। प्रतीव्याम् २। यजस्व क्रि०। जातवेदसम् २। चरिष्णुधूमम् २। अगृभीतशोचिषम् २।

---

(क) ऋ० ८।२३।१॥

**अन्वयः**। [हे मनुष्य! त्वं] प्रतिव्यां जातवेदसं चरिष्णुधूमम् अगृभीतशोचिषम् [अग्निं] हि ईड़िष्वा यजस्व च।

**भाष्यम्**। हे मनुष्य! त्वं 'प्रतिव्यां' रोगादिषु कामक्रोधाद्यन्तःशत्रुषु वा प्रतिगमनशीलं 'जातवेदसं' जातधनं जातप्रज्ञं वा 'चरिष्णुधूमं' विचरणशीलो धूमोऽविद्यानाशकं तेजो वा यस्य तम् 'अगृभीतशोचिषम्' अप्रतिहततेजस्कमग्निं परमात्मानं वा 'हि' 'ईड़िष्वा' स्तुहि 'यजस्व' पूजय च।

## अथाष्टमी।

विश्वमना ऋषिः। राक्षोघ्नं सामागस्त्य ऋषिः। आ० ब्रा०। छन्दादिः पूर्ववत्।

१र २र ३ ३ १ २ ३ २ १ ३ १ २
**न तस्य मायया चन रिपु रीशीत मर्त्यः।**
३ १ २ ३ २ ३ २
**यो अग्नये ददाश हव्यदातये ॥ १०४ ॥ (क)**

**पदपाठः**। न अ०। तस्य ६। मायया ३। चन अ०। रिपुः १। ईशीत क्रि०। मर्त्यः १। यः १। अग्नये ४। ददाश क्रि०। हव्यदातये ४।

**अन्वयः**। यः मर्त्यः हव्यदातये अग्नये ददाश तस्य रिपुः मायया चन न ईशीत।

**भाष्यम्**। 'यः' 'मर्त्यः' मनुष्यः 'हव्यदातये' देवेभ्यो हविष्प्रदानाय, शुभकर्मफलस्य दानाय वा 'अग्नये' भौतिकाय परमात्मने वा 'ददाश' हवींषि, स्वेन्द्रियं मनो वा प्रयच्छति 'तस्य' 'रिपुः' शत्रुः

(क) ऋ० ६।२।११ ॥ 'हव्यदातिभिः' ॥

रोगादिः कामक्रोधादिर्वा 'मायया' छलेन 'चन' अपि 'न' 'ईशीत' प्रभवति ।

## अथ नवमी ।

भरद्वाज ऋजिश्वा ऋषिः । सौमक्रतवं साम सोमक्रतुर्नामर्षिस्तेन दृष्टं यद्वा सोमक्रतवोऽग्निष्टोमादिसप्तसंस्थास्तत्र गीयमानत्वेन तत्सम्बन्धि अथवा बृहन्नामकमाग्नेयीयमग्निदेवताकं साम ( सौमक्रतवं च बृहदाग्नेयीयं वा । आ० ब्रा० ) उष्णिक् । वैश्वदेवोऽग्निः । विनियोगस्तु दशरात्रयागस्य चतुर्थदिवसे प्र-उ-ग-शस्त्ररूपेण ।

३ १ २ ३ २   ३ २   ३ १   ३ क २र

अप त्यं वृजिनꣳ रिपुꣳ स्तेनमग्ने दुराध्यम् ।

१ २   ३ २   २

दविष्ठ मस्य सत्पते कृधी सुगम् ॥ १०५ ॥ (क)

**पदपाठः** । अप अ० । त्यम् २ । वृजिनम् २ । रिपुम् २ । स्तेनम् २ । अग्ने सं० । दुराध्यम् २ । दविष्ठम् २ । अस्य क्रि० । सत्पते सं० । कृधी क्रि० । सुगम् २ ।

**अन्वयः** । हे सत्पते ! अग्ने ! [त्वं] त्यं वृजिनं रिपुं स्तेनं दुराध्यं दविष्ठम् अपास्य [अथवा तं] सुगं कृधी ।

**भाष्यम्** । हे 'सत्पते' सतां सज्जनानां पालक 'अग्ने' भौतिक परमात्मन् वा त्वं 'त्यं' तं 'वृजिनं' पापिनं 'रिपुं' शत्रुं 'स्तेनं' चौरं 'दुराध्यं' दुःखदं 'दविष्ठं' दूरतमम् 'अपास्य' अपक्षिप, अथवा तं 'सुगं' सुपथगामिनं 'कृधी' कुरु ।

**निरुक्तम्** । वृजिनानि वर्जनीयानि ॥ १०।४।१।१ ॥ सुगान् सुगमान् ॥ ६।२।१ ॥

(क) ऋ० ४।८।१३ ॥

## अथ दशमी ।

विश्वमना ऋषिः । राक्षोघ्नं सामागस्य ऋषिः । आ० ब्रा० । छन्दादिः पूर्ववत् । प्रातरनुवाके आश्विनशस्त्रे च ।

३क २र ३ १ २ ३ १ २
**श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।**
३ १र ३ १ २ ३ १ २
**नि मायिनस्तपसा रक्षसो दह ॥ १०६ ॥ (क)**

**पदपाठः ।** श्रुष्टी अ० । अग्ने सं० । नवस्य ६ । मे ६ । स्तोमस्य ६ । वीर सं० । विश्पते सं० । नि अ० । मायिनः २ । तपसा ३ । रक्षसः ६ । दह क्रि० ।

**अन्वयः ।** हे वीर ! विश्पते ! अग्ने ! मे नवस्य (=नवं) स्तोमस्य (=स्तोमं) [श्रुत्वा] श्रुष्टी (=शीघ्रं] मायिनः रक्षसः (=राक्षसान्) तपसा निदह ।

**भाष्यम् ।** हे 'वीर' वीर्यवन् 'विश्पते' प्रजापते 'अग्ने' भौतिक ! परमात्मन् ! वा त्वं 'मे' मम 'नवस्य स्तोमस्य' नूतनमिदानीं क्रियमाणं स्तोत्रं श्रुत्वा 'श्रुष्टी' शीघ्रं 'मायिनः' मायाविनः 'रक्षसः' बाधकान् रोगान् पापानि वा 'तपसा' स्वतेजसा 'निदह' नितरां भस्मी कुरु ॥

**निरुक्तम्** श्रुष्टीति क्षिप्रनाम आशु अष्टीति ॥ ६।१३।१ ॥

---

(क) ऋ० ६।२।११ ॥ 'तपुषा' ॥

# अथ व्याकरणम्।

अगृभीतशोचिषम् (१०३)—अगृहीतं ( हृग्रहोर्भश्छन्दसि ) अप्रतिहतं शोचिः [१८] तेजो यस्य तम्।

अति (१००)—अततेः इन्प्रत्ययः। लङ्घनार्थेऽव्ययम्।

अदितिः (१०२)—नञ् + 'दीङ्' क्षये, 'दो' अवखण्डने, + क्तिन्। दितिः खण्डोऽदितिरखण्डनीया शक्तिः।

अप (१०२)—नञ् + 'पा' रक्षणे + कः। अव्ययम्।

अरिः (९७)—ऋच्छतेः 'अच इः' उ० ४।१३९ इति इः।

आगमत् (१०२)—आ + गम् लुङ्।

आचिकेतत् (१०१)—आ + 'कित' ज्ञाने जु० चिकेति। लेटि अडागमः।

आशासत (१०१)—'शासु' अनुशिष्टौ अ० लङ् शपो लुक् न।

ईशानः (९९)—'ईश ऐश्वर्ये अ०। 'ताच्छील्य०' ३।२।१२९ इति चानश्।

करत् (१०२)—लेटि अडागमः।

कृधी (१०५)—कृ + लोट् हि, शप् ('व्यत्ययो बहुलम्' ३।१।८५), शप्लोपः ( 'बहुलं छन्दसि' २।४।७३ ) हेर्धिः ( 'श्रुशृणुपॄकृ०' ६।४।१०२ ) दीर्घः ('अन्येषामपि दृश्यते' ६।३।१३७)—कुरु।

चन (१०४)—'चन' शब्दे भ्वा पचाद्यच्। अप्यर्थेऽव्ययम्।

चरिष्णुधूमम् (१०३)—चरिष्णुः (चरतेः 'अलङ्कृञ्०' ३।२।१३६ इतीष्णुच्) विचरणशीलो धूमो [९८] यस्य तम्।

जज्ञानः (१०१)—जायते। 'छन्दसि लिट्' ३।२।१०५, 'लिटः कानज्वा' ३।२।१०६ इति कानच्। 'गमहनजन०' ६।४।९८ इत्युपधालोपः।

तोदस्य (९७)—तुदतेः 'हलश्च' ३।३।१२१ इति घञ्। तुदति नाशयत्यज्ञानमिति तोदो गुरुः शिक्षको वा। तस्य।

दविष्ठम् (१०५)—अतिशायने इष्ठन्। 'स्थूलदूर०' ६।४।१५६ एषां यणादिपरं लुप्यते पूर्वस्य च गुणः। तम्।

दाशिवान् (९७)—दाशतेः इन्। दाशिर्दानम्। 'तदस्या०' ५।२।९४ इति मतुप्। दाशिर्दानमस्यास्तीति।

दिवा (१०२)—चतुर्थी विभक्तेर्डादेशः।

दुराध्यम् (१०५)—दुः पूर्वादाङ् पूर्वाच्च ध्यायतेरच्। तम्।

देवयते (१००)—आत्मनो देवानिच्छतीति देवयत्तस्मै। क्यच्, शतृप्रत्ययश्च। तस्मै।

ध्रुवः (१०१)—'ध्रुव' गतिस्थैर्ययोः तु०। इगुपधेति कः।

नवस्य (१०६)—'णु' स्तुतौ अ०। 'ऋदोरप्' ३।३।५७ नूयते स्तूयतेऽचिरकृतत्वेन रमणीयत्वादिति, तस्य।

पूर्व्यम् (९८)—'पूर्व' पूरणे भ्वा०। पचाद्यच्। पूर्वस्मिन् काले भवं 'भवे छन्दसि' ४।४।११० इति यत्।

प्रतीव्याम् (१०३)—प्रति+'इवि' गतौ भ्वा०, 'वी' गत्यादिषु अ०। अधिकरणे औणादिकः क्विप्। प्रति वीप्सार्थम्। पुनः पुनः इन्वति, वेति वा ऋतुषु इति प्रतिव्यः प्रतिगमनशीलः तम्।

प्रभरता (९८)—प्रहरत। हस्य भः। 'ऋचितुनु०' ६।३।१३३ इति दीर्घः।

मयः (१०२)—'मीञ्' हिंसायाम् क्र्या० मीनाति, 'मय' गतौ भ्वा०, +असुन्। मीनाति हिनस्ति दुःखमिति मयः सुखम्।

मायिनः (१०६)—माया छलमस्यास्मिन् वास्ति व्रीह्यादिपाठादिनिः।

मेधाम् (१०१)—मेधते सङ्गच्छते सर्वमस्याम्। 'मेधृ' सङ्गमे भ्वा०। 'गुरोश्च हलः' ३।३।१०३ इत्यः। ताम्।

यह्वी (९९)—यातेर्ह्वयतेश्च 'मृगय्वा०' उ० १।३७ इति कुः। यातः प्राप्तः पुण्यवशेन स्वनाम्ना हूयते च यह्वरपत्यं तत्सम्बुद्धौ।

रिपुः (१०४)—'रप' व्यक्तायां वाचि भ्वा०। 'रपेरिच्चोपधायाः' उ० १।२६ अनिष्टं रपति वदतीति।

विपाम् (९८)—'विप' प्रेरणे चु० क्विप्। तेषाम्।

बिभ्रते (९८)—'डुभृञ्' धारणपोषणयोः जु०। 'लटः शतृ०' ३।२।१२४ इति शतृप्रत्ययः। बिभ्रत् तस्मै।

वृजिनम् (१०५)—'वृजी' वर्जने रु०। 'वृजेः किच्च' उ० २।४७ इतीनच्। तम्।

वीचे (९७)—अवीचे। अडभावः।

शन्ताता (१०२)—'शिवशमरिष्टस्य करे' ४।४।१४३। शं करोतीति शन्तातिः। डाभावः।

शरणे (९७)—'शॄ' हिंसायाम् क्र्या०। 'करणाधिकरणयोश्च' ३।३।११७ इति ल्युट्। योरनादेशः, णत्वम्। शीर्यन्ते दुःखानि यत्रेति शरण: (म्) तस्मिन्।

श्रिये (१०१)—'श्रिञ्' सेवायाम् भ्वा०। 'क्विव्वचिप्रच्छिश्रि०' उ० २।५७ इति क्विप्, सम्प्रसारणाभावः, दीर्घश्च। श्रयति श्रीयते वा सा श्रीः। तस्यै।

श्रुष्टी (१०६)—अश्नोतेः क्तिन्। 'कृदिकारादक्तिनः' वा० ४।१।४५ इति ङीष् वा। श्रुष्टी व्याप्तिः।

सप्त (१०१)—'षप' समवाये भ्वा० 'सप्तशूभ्यां०' उ० १।१५७ इति कनिम् तुट् च। सप्तभिः। विभक्तिव्यत्ययः।

सहसः (९९)—सहः (३८) बलं, तस्य।

सुगम् (१०५)—सु+गम्+डः। 'सुदुरोरधिकरणे' वा० ३।२।४८।

स्तेनम् (१०५)—'स्तेन' चौर्ये। स्तेनयति। पचाद्यच्। तम्।

स्या (१०२)—'त्यदादीनामः' ७।२।१०२ इत्यनुवर्त्य 'तदोः सः सावनन्त्ययोः' ७।२।१०६ त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे। स्यः। टाप्।

स्त्रिधः (१००)—'स्त्रिधु' शोषणे, क्विप् चेति क्विप्।

स्वित् (९७)—सु+इण् गतौ+क्विप्+तुक्।

इत्येकादशी दशतिरेकादशः खण्डश्च।

---

प्रथमम् (आग्नेयं) पर्व। प्रथमोऽध्यायः। प्रथमः प्रपाठकः। द्वादशः खण्डः। द्वादशी दशतिः।

## अथ प्रथमा।

सोभरि ऋषिः। चत्वारि सामानि प्रमंहिष्ठशब्दयुक्तान्येतन्नामधेयानि, इन्द्रो वसिष्ठो वा ऋषिः, यद्वा एषां मध्ये तृतीयमासितमसितो नामर्षिस्तत्सम्बन्धि। आ० ब्रा०। ककुप् छन्दः (क)। अग्निः। विनियोगस्तु प्रातरनुवाके आश्विनशस्त्रे च।

१ २      ३ १ २   ३ २   ३ १ २

प्रमंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।

३   १ २र    ३ २

उपस्तुतासो अग्नये॥ १०७॥ (ख)

---

(क) ककुम्मध्ये चेदन्त्यः। पि० छ० सू० ३।१९ गायत्र्योः पादयोर्मध्ये जागतश्चेत्पादो भवति तदा सा उष्णिक् ककुप् संज्ञां लभते।

(ख) ऋ० ६।७।१४॥

**पदपाठः ।** प्र अ० । मंहिष्ठाय ४ । गायत क्रि० । ऋतावने ४ । बृहते ४ । शुक्रशोचिषे ४ । उपस्तुतासः सं० । अग्नये ४ ।

**अन्वयः ।** हे उपस्तुतासः ! [यूयं] मंहिष्ठाय ऋतावने बृहते शुक्रशोचिषे अग्नये प्रगायत ।

**भाष्यम् ।** हे 'उपस्तुतासः' उपगम्य स्तोतारः । यूयं 'मंहिष्ठाय' दातृतमाय 'ऋतावने' यज्ञवते 'बृहते' महते 'शुक्रशोचिषे' शुभ्रदीप्तये 'अग्नये' यज्ञाग्नये परमात्मने वा 'प्रगायत' तद्गुणान् वर्णयत ।

**निरुक्तम् ।** मंहत इति दानकर्म्मा ॥ ३।१९।१२ ॥ गायतीत्यर्चतिकर्मा ॥ ३।१९।१ ॥

## अथ द्वितीया ।

सौभरि ऋषिः । एकं साम वाजभृत्, वाजाभृत्, वाजाभर्म्मीयं वा भरद्वाज ऋषिः । आ० ब्रा० । ककुप् । आभिप्लविके उक्थे प्रशास्तृपाठ्यशस्त्रे विकल्पेन विनियोगः ।

१र २र ३ २ ३ १ २ ३ १ ३ १ २
**प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्म्मभिः ।**
२ ३ २ ३ १र २र
**यस्य त्वं सख्य माविथ ॥ १०८ ॥ (क)**

**पदपाठः ।** प्र० अ० । सः १ । अग्ने सं० । तव ६ । ऊतिभिः ३ । सुवीराभिः ३ । तरति क्रि० । वाजकर्मभिः ३ । यस्य ६ । त्वम् १ । सख्यम् २ । आविथ क्रि० ।

**अन्वयः ।** हे अग्ने! यस्य त्वं सख्यम् आविथ सः तव वाजकर्मभिः सुवीराभिः ऊतिभिः प्रतरति ।

---

(क) ऋ० ८।१।३४ ॥ 'तिरते वाजभर्मभिः' 'सख्यमावरः' ।

**भाष्यम्।** हे अग्ने भौतिक! परमात्मन्! वा 'यस्य' जनस्य 'त्वं' 'सख्यम्' आनुकूल्यम् 'आविथ' प्राप्नोषि 'सः' 'तव' 'वाजकर्मभिः' अन्नवतीभिः 'सुवीराभिः' शोभनपुत्रवतीभिः 'ऊतिभिः' रक्षाभिः 'प्रतरति' प्रवर्द्धते।

## अथ तृतीया।

सौभरिर्ऋषिः। त्रीणि सामानि सोभरिर्नामर्षिस्तेन दृष्टानि। आ० ब्रा०। ककुप्। अग्निः। महाव्रतयागस्य निष्केवल्यप्रयोगे विनियोगः।

१ २ क २र ३ १ २ ३ १ २ ३ १ २
**तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे।**
३ २ ३ १ २
**देवत्रा हव्यमूहिषे॥ १०९॥ (क)**

**पदपाठः।** तम् २। गूर्धया क्रि०। स्वर्णरम् २। देवासः १। देवम् २। अरतिम् २। दधन्विरे क्रि०। देवत्रा अ०। हव्यम् २। ऊहिषे क्रि०।

**अन्वयः।** [हे मनुष्य!] देवासः [यं] दधन्विरे स्वर्णरं देवम् अरतिं तम् [अग्निं] [त्वं] गूर्धया, [सः अग्निः] देवत्रा हव्यम् ऊहिषे (=ऊहे, वहति)।

**भाष्यम्।** हे मनुष्य! 'देवासः' विद्वांसः यं 'दधन्विरे' यज्ञवेद्यामादधति ध्यायन्ति वा 'स्वर्णरं' सुखस्य नेतारं 'देवं' दिव्यम् 'अरतिं' स्वामिनं 'तम्' अग्निं परमात्मानं वा त्वं 'गूर्धया' स्तुहि। सोऽग्निः परमात्मा वा 'देवत्रा' देवान् विदुषो वा प्रति 'हव्यं' हविः दातव्यं शुभकर्मफलं वा 'ऊहिषे' ऊहे, वहति, प्रापयति।

**निरुक्तम्।** गूर्धयतीत्यर्चतिकर्मा॥ ३।१९।१॥

---

(क) ऋ० ८।१९।१॥ 'धीहिरे'॥

## अथ चतुर्थी ।

सौभरिः प्रयोगो वा ऋषिः । द्वे सामनी सोभरिपुत्रस्य पत्यस्य ऋषेः, पथिसम्बन्धिनी, अन्यगोत्रस्य पत्यस्य ऋषेर्वा । आ० ब्रा० । ककुप् । अग्निः ।

१ २ १ १ २ ३ १ २ ३ १ २ ३ २ ३ २
**मा नो हृणीथाः अतिथिं वसुरग्निः पुरुप्रशस्त एषः ।**
३ १ २ ३ २
**यः सुहोता स्वध्वरः ॥११०॥ (क)**

**पदपाठः ।** मा अ० । नः ६ । हृणीथाः क्रि० । अतिथिम् २ । वसुः १ । अग्निः १ । पुरुप्रशस्तः १ । एषः १ । यः १ । सुहोता १ । स्वध्वरः १ ।

**अन्वयः ।** हे मनुष्य ! यः एषः अग्निः नः स्वध्वरः सुहोता पुरुप्रशस्तः वसुः [तम्] अतिथिं मा हृणीथाः ।

**भाष्यम् ।** हे मनुष्य ! 'यः' 'एषः' 'अग्निः' भौतिकः परमात्मा वा 'नः' अस्माकं 'स्वध्वरः' शोभनयज्ञसम्पादकः 'सुहोता' साधुदेवानामाह्वाता शुभकर्म्मफलदाता वा 'पुरुप्रशस्तः' बहुस्तुतः 'वसुः' धनप्रदः जगन्निवासो वा तम् 'अतिथिं' सततगमनशीलं पूज्यं वा 'मा हृणीथाः' मा हर, सङ्गमय इत्यर्थः ।

## अथ पञ्चमी ।

सोभरि ऋषिः । एकं साम देवानीकं देवानीको नामर्षिस्तेन दृष्टम् । आ० ब्रा० । ककुप् । अग्निः । विनियोगस्तु आभिप्लविकाहानामुक्थक्रतौ तृतीयसवने प्रशास्तृव्यवहार्यशस्त्ररूपेण ।

---

(क) ऋ० ८।७१।१५ ॥ 'हृणीतामतिथिः' ॥

३१ २ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ २
भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः।
३ २ ३ १र २र
भद्रा उत प्रशस्तयः ॥ १११ ॥ (क)

**पदपाठः।** भद्रः १। नः ६। अग्निः १। आहुतः १। भद्रा १। रातिः १। सुभग सं०। भद्रः १। अध्वरः १। भद्राः १। उत अ०। प्रशस्तयः १।

**अन्वयः।** आहुतः अग्निः नः भद्रः [भवतु]। हे सुभग! [तव] रातिः भद्रा [भवतु]। अध्वरः भद्रः [भवतु] उत (=अपि च) प्रशस्तयः भद्राः [भवन्तु]।

**भाष्यम्।** 'आहुतः' सम्यक् सत्कृतः 'अग्निः' यज्ञाग्निः परमात्मा वा 'नः' अस्माकं 'भद्रः' कल्याणकृद् भवतु। हे 'सुभग' शोभनधन! तव 'रातिः' दानं 'भद्रा' कल्याणकरं भवतु। 'अध्वरः' अस्माकं हिंसारहितो यज्ञः 'भद्रः' कल्याणकरः तव कृपया भवतु, 'उत' अपि च 'प्रशस्तयः' अस्मत्स्तुतयः 'भद्राः' कल्याण्यो भवन्तु!

## अथ षष्ठी।

सोभरि ऋषिः। एकं साम गौतमं गोतम ऋषिः, साध्यं वा सध्यो नामर्षिः। षा० ब्रा०। ककुप्। अग्निः। पूर्ववद्विनियोगः।

१ २ ३ १र २ ३ १र २र ३ १ २
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्।
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥ ११२ ॥ (ख)

**पदपाठः।** यजिष्ठम् २। त्वा २। ववृमहे क्रि०। देवम् २। देवत्रा अ०। होतारम् २। अमर्त्यम् २। अस्य ६। यज्ञस्य ६। सुक्रतुम् २।

---

(क) ऋ० ८।१।३२॥ (ख) ऋ० ८।१।२९॥

**अन्वयः ।** [हे अग्ने ! वयम्] अस्य यज्ञस्य सुक्रतुं यजिष्ठं देवत्रा देवं होतारम् अमर्त्यं त्वा वव्रमहे ।

**भाष्यम् ।** हे अग्ने ! भौतिक ! परमात्मन् ! वा वयमृत्विज उपासका वा 'अस्य यज्ञस्य' प्रवर्त्तमानस्य श्रेष्ठतमस्य यागकर्मणः 'सुक्रतुं' निष्पादकत्वेन शोभनकर्माणं 'यजिष्ठं' यष्टृतमं 'देवत्रा देवं' देवेषु वस्वादिषु दिव्यगुणेषु वा मध्ये प्रकाशमानं 'होतारं' देवानामाह्वातारं सुखस्य दातारं वा 'अमर्त्यम्' अविनाशिनं 'त्वा' त्वाम् 'वव्रमहे' वृणीमहे सम्भजामहे ।

## अथ सप्तमी ।

सोभरिर्ऋषिः । एकं संवर्गनामधेयं साम जमदग्निर्ऋषिः । आ० व्रा० । ककुप् । अग्निः ।

१ २ ३ १र २र३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**तदग्ने द्युम्नमाभर यत् सासाहासदने कञ्चिदत्रिणम् ।**
३ २ २र ३क २र
**मन्युं जनस्य दूढ्यम् ॥ ११३ ॥ (क)**

**पदपाठः ।** तत् २ । अग्ने सं० । द्युम्नम् २ । आभर क्रि० । यत् अ० । सासाहा क्रि० । आसदने ७ । कम् २ । चित् अ० । अत्रिणम् २ । मन्युम् २ । जनस्य ६ । दूढ्यम् २ ।

**अन्वयः ।** हे अग्ने ! [त्वमस्मभ्यं] तत् द्युम्नम् आभर । यत् (=यदा) [त्वम्] आसदने कंचित् अत्रिणं सासाहा (=अत्यर्थमभिभवसि) [तदा] जनस्य दूढं मन्युम् [अभिभव] ।

**भाष्यम् ।** हे 'अग्ने' भौतिक ! परमात्मन् ! वा त्वमस्मभ्यं 'तत्' पूर्वोक्तं 'द्युम्नं' धनं प्रकाशकं ज्ञानं वा 'आभर' आहर देहि । 'यत्' यदा त्वम् 'आसदने' यज्ञगृहे हृदि वा 'कंचित्' कमपि 'अत्रिणं' बाधकमज्ञानादिकं वा 'सासाहा' लकारव्यत्ययः,

(क) ऋ० ६।१।२१ ॥ 'सासहत्' 'दूढ्यः' ॥

अत्यर्थमभिभवसि, तदा 'जनस्य' 'दूढ्यं' दुर्धियं 'मन्युं' क्रोधं च अभिभव, नाशय।

**निरुक्तम्।** सदनात् सहस्थानात्॥ ७।२४।१॥ मन्युरिति क्रोधनाम॥ ३।८।१३॥ मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्म्मणो वा मन्यन्त्यस्मादिषवः॥ १०।२८।२॥

## अथाष्टमी।

विश्वमना ऋषिः। एकं राक्षोघ्नं सामागस्त्य ऋषिः। आ० ब्रा०। उष्णिक्। अग्निः। विनियोगस्तु प्रातरनुवाके आग्नेयक्रतौ च।

२र ३ १ २ ३ १ १ २र ३ १ २ ३ २
यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे।

२उ ३ २उ ३ १ २
विश्वेदग्निः प्रति रक्षांꣳसि सेधति॥ ११४ (क)

**पदपाठः।** यत् अ०। वा अ०। उ अ०। विश्पतिः १। शितः १। सुप्रीतः १। मनुषः ६। विशे ७। विश्वा २। इत् अ०। अग्निः १। प्रति अ०। रक्षांसि २। सेधति क्रि०।

**अन्वयः।** यत् वा उ विश्पतिः शितः अग्निः मनुषः विशे सुप्रीतः [भवति] [तदा] इत् [सः] विश्वा रक्षांसि प्रतिषेधति।

**भाष्यम्।** 'यत् वा उ' यदा हि 'विश्पतिः' प्रजापालकः 'शितः' हविर्दानेन तीक्ष्णीकृतो ध्यानादिभिस्सम्यगुपासितो वा 'अग्निः' भौतिकः परमात्मा वा 'मनुषः' मनुष्यस्य 'विशे' गृहे हृदि वा 'सुप्रीतः' सुष्ठु प्रीतः भवति तदा 'इत्' एव स 'विश्वा' विश्वान् सर्वान् 'रक्षांसि' बाधकान् रोगान् कामाद्यन्तश्शत्रून् वा 'प्रतिषेधति' हिनस्ति निवारयति।

---

(क) ऋ० ८।२।११॥ 'विशि'॥

# अथ व्याकरणम् ।

आविर्थ (१०८)—अवतेः लिट् थल् 'छन्दसि लुङ् लङ् लिटः' ।

आसदने (११३)—आ + सीदतेः 'करणा०' ३।३।११७ इति ल्युट्, योरनः ।

उपस्तुतासः (१०७)—उप + ष्टुञ् + क्तः । असुक् । उपस्तोतारः ।

ऊहिषे (१०९)—वहते लिटि आत्मनेपदस्य मध्यमैकवचनं प्रथमैकवचनस्थाने । ऊहे, वहति ।

ऋतावने (१०७)—ऋतं सत्यं यज्ञं वा तस्मै मतुपि छान्दसम् । तस्मै ।

गायत (१०७)—'गै' शब्दे भ्वा० लोट् त ।

गृधया (१०९)—नैरुक्तधातुः । अन्येषामपीति दीर्घः ।

दूढ्यम् (११३)—'पृषोदरादीनि०' ६।३।१०९ । दुःखेन ध्यायतीति दूढ्यः । आतश्चोपसर्गे इति कः । 'दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च' ।

देववी (१०९)—'देवमनुष्य०' ५।४।५६ एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् ।

पुरुप्रशस्तः (११०)—पुरुः बहुः प्रशस्त इति । कर्मधा० ।

मंहिष्ठाय (१०७)—'महि' वृद्धौ भ्वा० आ० ततस्तृचि 'तुश्छन्दसि' ५।३।५९ इतीष्ठनि 'तुरिष्ठेमेयस्सु' ६।४।१५४ इति तृलोपः । तस्मै ।

मनुषः (११४)—'जनेरुसिः' उ० २।११५ इति बाहुलकान्मनधातोरपि उसिः । ६ष्ठी ।

मन्युम् (११३)—'मन' ज्ञाने त० । 'यजिमनि०' उ० ३।२० इति युच् बाहुलकादनादेशाभावः । मन्यतेर्दीप्तिकर्मणो वा युच् ।

वाजकर्मभिः (१०८)—वाजः [३८] अन्नं कर्म (कृञ् + मनिन्) यस्यास्ताभिः ।

विशि (११४)—विशते अस्मिन् इति विशः ( कः ) गृहस्तस्मिन् ।

शितः (१४४)—'शिञ्' निशाने स्वा० निशातः ।

सासाहा (११३)—'षह' मर्षणे (अभिभवे) भ्वा० यङ्लुकि । सासहीहि ।

सुप्रीतः (११४)—सु + प्रीयते दि०, प्रीणाति क्र्या०, + क्तः ।

सेधति (११४)—'षिध' गत्याम् भ्वा० ।

स्वर्णरम् (१०९)'स्वृ' शब्दोपतापयोः भ्वा० अन्येभ्योऽपीति बाहुलकात् कर्मणि विच् । गुणः । अव्ययसंज्ञा । सुपो लुक् । रेफस्य विसर्जनीयः । स्वः नरम्—स्वर्णरम् ।

हृणीथाः (११०)—'हृणीङ्' रोषणे लज्जायां च कण्ड्वादिः लिङि थास् ।

इति द्वादशो दशतिर्द्वादशः खण्डश्च ।

**समाप्तमिदमाग्नेयं पर्व च ।**

# PUBLISHER'S NOTE.

Bengali Translation of आग्नेय पर्व (in the Press).

Other पर्वs of सामवेद with Bengali Translation and other valuable and rare शास्त्रग्रन्थs will be published one by one. The same plan is to be adopted.

We invite the attention of one and all, who cherish love for शास्त्रग्रन्थs, to the fact that they should not lose the opportunity of collecting them at a comparatively small cost and thereby giving impetus to our noble attempt.

**Published by:—Brojeshwar Roy,**

16, Advaita Charan Mullick's Lane ( Rambagan );

P. O. Beadon Square, Calcutta.

---

Printed by—P. C. Chakravartty, **VIDYODAYA PRESS.**

8-2, Kashi Ghosh Lane, Calcutta.